# MUGDHABODHA.

A

SANSCRIT GRAMMAR.

BY

VOPADEVA GOSWAMI

EDITED BY

HARI MOHANA DASA GUPTA.

**at the request of**

BABU BHUVANACHANDRA VASAKA.



CALCUTTA:

PRINTED & PUBLISHED BY

BABU BHUVANACHANDRA VASAKA

At the sanbàda Jnànaratnàkara Press.

No. 8 Nimtollah Ghat Street

1873.

# मुग्धबोधं व्याकरणम् ।

महामहोपाध्याय

## श्रीवोपदेवगोस्वामिविरचितम् ।

श्रीयुतबाबुभुवनचन्द्रवसाक महोदयस्य

प्रार्थनया

श्रीहरिमोहनदासगुप्तेन

संस्कृतम् ।

कलिकातानगरे

श्रीयुत भुवनचन्द्र वसाक संस्थापित संवाद

ज्ञानरत्नाकराख्ययन्त्रे तद्द्वारैव

१९३० संवत्सरे

मुद्रितम् ।

# सूचीपत्रम् ।

# मुग्धबोधं व्याकरणम् ।



## संज्ञापादः ।

मुकुन्दं सच्चिदानन्दं प्रणिपत्य प्रणीयते ।
मुग्धबोधं व्याकरणं परोपकृतये मया ॥

१ । ॐ नमः शिवाय ॥

इति नमस्कारसूत्रम् ।

२ । शं शब्दैः ॥

शब्दैर्मङ्गलं स्यात् इति प्रयोजनाभिधेयसम्बन्धाः ।

३ । अ इ उ ऋ लृ क, ए ओ ङ ऐ औ च, ह य व र ल, ञ ण न ङ म, झ ढ ध घ भ, ज ड द ग ब, ख फ छ ठ थ, च ट त क प, श ष साद्यन्ताख्याः ॥

एषां मध्ये ये वर्णास्ते आदिवर्णान्तवर्णसमाहारसंज्ञाः स्युः ।

४ । इत् ज्ञाते ॥

कस्मैचित्कार्य्यायोच्चार्य्य [illegible] स्यात्

तस्य कार्य्येऽनुस्वारः । यथा अचि कङ्चाः संज्ञार्थाः । इसेऽकारउच्चारणार्थः ।

५ । आवत् स्वर्घप्लु ॥

अ आ अ इति वर्णत्रयं क्रमेण स्व र्घ प्लु संज्ञं स्यात् । वच्छब्दात् इ ई इ इत्यादिषु च । स्व एज्नास्ति ।

६ । ञपोऽक्समोर्णक्टक्च ॥

समाभोञपोऽक्च परस्परं र्णसंज्ञः स्यात् क्टक्च । साम्यन्त्वेकस्थानत्वम् ।

अत्रयं ए ह क ख ग घ ङाः कण्ठ्याः ।

इत्रयं च छ ज झ ञ श ए ऐ या तालव्याः ।

ऋत्रयं ट ठ ड ढ ण र षा मूर्द्धन्याः ।

लृत्रयं त थ द ध न ल सा वो दन्त्याः ।

उत्रयं प फ ब भ म वा ओ औ ओष्ठ्याः ।

तेषां यो येन समः स तस्य तत्र ततः ।

७ । चपोदिताकानितार्णः ॥

उपकारेता चपेन इद्गृहितेनाका र्णोऽग्रह्यते ।

८ । इङोरलेङ् गुः ॥

इङः स्थाने अर् अल् एङ् एते गुसंज्ञाः स्युः ।

९ । [illegible] ॥

अचः स्थाने आ आर आल ऐच् एते त्रिसंज्ञाः स्युः ।

१० । प्रपरापसंन्यवानुनिर्दुर्व्यधिस्वत् परिप्रत्यभ्यत्यप्युपाङ् गिः ॥

एते विंशतिर्गिसंज्ञाः स्युः ।

अत्राच्चायां स्वती नातिक्रमेऽतिः पर्य्यधी गतौ ।
अपिः पदार्थसंभाव्यगर्हानुज्ञासमुच्चये ।

११ । भ्वादिर्धुः ॥

भूसत्तायामित्यादिर्गणो धुसंज्ञः स्यात् ।

१२ । सित्यादिः क्तिः ॥

स्यादिस्त्यादिश्च क्तिसंज्ञः स्यात् ।

१३ । क्तद्वव्वान्येकद्विबह्वेकशः ॥

क्तेरेकैकं वचनं क्रमात् कद्वव्वसंज्ञं स्यात् । तानि च क्रमादेकद्विबह्वर्थेषु प्रयुज्यन्ते ।

१४ । त्यन्तान्यौ दली ॥

त्यन्तःशब्दोदसंज्ञः स्यात् । अन्यस्तु लिसंज्ञः ।

१५ । लुपि न सन्ध्याद्यविधौ ॥

लुबिति लोपे कृते यो लुप्तस्तदाद्यन्तयोः

१६ । चादिर्गिर्निः ॥

चादिर्गणोगिश्च निसंज्ञः स्यात् ।

१७ । णमितोऽन्त्याचोऽन्तेऽन्तस्यादौ ॥

णिद्‌यस्योच्यते तस्यान्त्यादचः परः निदन्ते ङिदन्तस्य स्थाने मिदादौ स्यात् ।

१८ । परस्त्यः ॥

प्रकृतेः परो यः स त्यसंज्ञः स्यात् ।

१९ । अं अः नुवी ॥

अकार उच्चारणार्थः विन्दुद्विविन्दुमात्रौ वर्णौ क्रमान्नुविसंज्ञौ स्तः ।

२० । क + पौ ᳵ मूल्यौ ॥

कपावुच्चारणार्थौ वज्रगजकुम्भाकृती वर्णौ क्रमान्मूलीसंज्ञौ स्तः ।

२१ । होऽझस् ॥

हकारो झस्संज्ञः स्यात् । इति संज्ञापादः ।

---

अच् सन्धिः ।

२२ । सह णौ घं: ॥

णौं परे पूर्वस्य णौं न सह घं: स्यात् । [illegible]

लक्ष्मीशः विष्णूत्सवः धातॄद्धिः सल्ल्वन्तः होतॄ-
कारः ।

२३ । आदिगेचोर्गुवी ॥

अवर्णात्परयोरिगेचोरवर्णेन सह क्रमाद्गुवी
स्तः । हृषीकेशः दामोदरः । सन्धिग्रहणा-
त्सन्धिलुप्त्यैव न सन्धिः । माधवर्द्धिः शिवल्कारः
कृष्णैकत्वं मुकुन्दौकः कृष्णैक्यं भवौषधम् ।

२४ । गेर्धारनेधिनएङ्च्छकोः ॥

गेरवर्णात्परयोरेधिन्वर्जितस्य धारेङ्च्छको-
रवर्णेन सह क्रमाद्गुवी स्तः । प्रेजते परो-
खति उपार्च्छति । अनेधिनः किम् उपैधते अवैति

२५ । लिधोर्वा ॥

लिधोस्तु पूर्वोक्तं कार्य्यं वा स्यात् । प्रेकीयति
प्रैकीयति प्रोघीयति प्रौघीयति प्रार्च्छीयति
प्रच्छीयति प्राल्कारीयति प्रल्कारीयति ।

२६ । लोपोऽक्योमाङोः ॥

अवर्णस्य ओमाङोः परयोर्लोपः स्यात् ।
शिवायोन्नमः शिवेहि ब्रह्मोतं राजर्षिः ।
स्थानिवदादेशः । द्वयोर्विभाषयोर्मध्ये विधिर्नित्यः

२७ । एवे ऽनियोगे ॥

अवर्णस्य एवे परे लोपः स्यात् अनियोगे। अद्येव। नियोगे तु। अद्यैव गच्छ।

२८। वौष्ठोत्वोः से॥

अवर्णस्य ओष्ठोत्वोः परयोर्लोपः स्यात् वा से सति। बिम्बोष्ठः बिम्बौष्ठः स्थूलोतुः स्थूलौतुः। से किं तवौष्ठः।

२९। वीसेत्वृतोब्रिं॥

अवर्णात्परऋतो ब्रिमाप्नोति वीसे सति। शीतार्त्तः। वीसे किम्। परमर्त्तः। त्वन्तस्य नालुट्र्त्तिः।

३०। ऋणप्रवसनवत्सरवत्सतरदशकम्बलस्यर्णः॥

एषामवर्णात्परऋणोब्रिमाप्नोति। ऋणार्णं प्रार्णम्।

३१। स्वाचयोरीरोहिन्यौ॥

अनयोरवर्णात्परावेतौ ब्रिमाप्नुतः। स्वैरं अक्षौहिणी।

३२। प्रस्योढोढ्यूहाः॥

प्रस्यावर्णात्परा एते ब्रिं यान्ति। प्रौढः प्रौढिः प्रौहः।

## ३३ । वैप्रैष्यौ ॥

प्रस्यावर्णात्परावेतौ ब्रिं वा प्राप्नुतः । प्रेषः प्रैषः प्रेष्यः प्रैष्यः ।

## ३४ । मनीषाः ॥

मनीषाद्यानिदाल्वन्ते । मनीषा हलीषा लाङ्गलीषा शकन्धुः कुलटा सीमन्तः पतञ्जलिः सारङ्गः ।

## ३५ । यलायवायावो वीचः ॥

इचः स्थाने य व र ल अय् अव् आय् आव् एते अचि परे क्रमात् स्युः । त्र्यम्बकः विष्णूष्मौ धात्वच्युतौ लाकृतिः हरये प्रभवे नायकः पावकः ।

## ३६ । वावगोर्दान्ते ॥

गोरिचः स्थाने अवः स्याद्वा अचि परे दान्ते । गवेशः गवीशः । दान्ते किं गवे । गवेन्द्र गवाक्षौ नित्यम् ।

## ३७ । अयांग्वोर्लुब्वा ॥

दान्ते स्थितानामयादीनां यवयोर्लुप्स्याद्वा । हरएहि हरयेहि प्रभइदं प्रभविदं श्रिया-एति श्रियायेति गुरा उत्कः गुरावुत्कः ।

३८। एङोऽतः॥

दान्तेस्थितादेङः परस्याकारस्य लुप् स्यात्। हरेऽव विष्णोऽव।

३९। गोर्वा।

गोरति वा सन्धिः। गवाग्रं गोऽग्रं गो अग्रम्।

४०। नाज्ञोन्तोऽनाङ्प्लुतः॥

अज्ञातचोकारान्तश्च निराङ्वर्ज्जः सन्धिं नाप्नोति प्लुतश्च। अ अनन्त इ ईश्वर उ उमेश अहो ईशान कृष्ण एहि। अनाङ् किम्।

मर्य्यादायामभिविधौ क्रियायोगेषदर्थयोः। य आकारः स ङित्प्रोक्तो वाक्यस्मरणयोरङित्। आत्मबोधादैकदेशादालोक्योपरतैर्हरिः। आ एवं तत्त्वमर्य्यादा आ एवं तत्कृतं मया।

४१। वद्वेऽमीत्वे॥

त्वे निष्पन्नोऽमीशब्दो द्वे निष्पन्नईदूदेदन्तश्च सन्धिं नाप्नोति। अमी ईशाः हरी एतौ विष्णू इमौ गङ्गे इमे। त्वद्वे किं अव्ययं वध्वयं।

४२। स्योद्वतौ॥

सौ जातआकारः सन्धिं वा नाप्नोति इतौ [illegible]

४३ । उङ् णपान्त्वचि व वा ।

उङ् सन्धिं वा नाप्नोति इतौ परे। नपात्परस्तु वो वा स्यादचि । उ इति विति किम्वुक्तं कि-मुउक्तम् किमूक्तमिति केचित् ।

४४ । वेक्स्वस्वार्योऽसे ॥

इक् सन्धिं वा नाप्नोति स्वस्व वा स्यादर्यो परे न तु से दान्ते। शार्ङ्गी अत्र शार्ङ्गिन्नत्र शार्ङ्ग्यत्र। असे किं हर्य्यर्चा ।

४५ । ऋत्यक् ॥

अक् सन्धिं वा नाप्नोति ऋति परे स्वस्व वा स्यात् । ब्रह्मा ऋषिः ब्रह्मऋषिः ब्रह्मर्षिः ।

इत्यच्सन्धिपादः ।

---

हस्सन्धिः ।

४६ । स्तुश्चुभिः श्चुयात् ॥

सकारतवर्गौ शकारेण चवर्गेन वा योगे श-कारचवर्गौ क्रमात्प्राप्नुतः न तु शात्परौ। सञ्चित् शार्ङ्गिञ्जय । अशात् किं प्रश्नः ।

४७ । ष्टुभिः ष्टुष्टुवन्ताठो ॥

सकारतवर्गौ षकारेण टवर्गेण वा योगे षकार टवर्गौ क्रमात्प्राप्नुतः नतु षकारे परे नच दान्तात्टवर्गात्परौ । तट्टीका चक्रिण्टौकसे । अपि किं सत्षष्ठः । अदान्तटोः किं षट् ते ।

४८ । षस्मां षस्त्वति षस्गर्य्यः ॥

एते निपात्यन्ते ।

४९ । खेल्लस्तोः ॥

ले परे तोर्लकारः स्यात् । तल्लयः विद्वाँल्लिखति । यलोद्विधारो निरनुनासिकः सानुनासिकः । ञमोऽनुनासिकस्तेन तत्स्थाने सानुनासिकः ।

५० । म्नोर्नुर्झस्यदान्ते ॥

अदान्ते स्थितयोर्मनयोर्नुः स्यात् झसि परे । रंस्यते दृंहितम् ।

५१ । ञपेञम्नोः ॥

अदान्ते स्थितस्य नोर्ञपे परे ञम् स्यात् । शान्तः अङ्कितः ।

५२ । वात्वरयपेऽरयम् ॥

दान्ते अदान्ते वा स्थितस्य मो रेफवर्ज्जयपे



परे यम् वर्ज्जयमो स्यात् । यमोऽनुनासिकः ।

यय्यम्यते यँयम्यते हरिम्भज हरिंभज । कम्यतइति पूर्वेण नित्यम् । अरे किं रंरम्यते ।

५३ । दान्तेमोऽसम्राजोहसे नुः ॥

दान्ते स्थितस्य मस्य हसे परे नुः स्यान्नतु सम्राजः । शिवं स्तौति असम्राजः किं सम्राडिति ।

५४ । पुंसः सन् खप्यम्परेऽख्ये ॥

पुंसो मस्य सन् स्यादम्परे खपि परे नतु ख्ये । पुंस्कोकिलः । अम्परे किम् पुंक्षीरम् । अख्ये किं पुंख्यातः ।

५५ । नोऽप्रशामश्छते ॥

दान्ते स्थितस्य नस्य सन् स्यादम्परे छते परे नतु प्रशामः । शार्ङ्गिंश्छिन्धि चक्रिंस्त्राहि । अम्परे किं सन्त्सरुः । अप्रशामः किं प्रशान्तनोति ।

५६ । काँस्कान्नॄः पिवा ॥

कांस्कान् कान् कान् नॄंस्पाहि नॄन्पाहि ।

५७ । नशाटनङ्न्नकन् शमस् समसिवा ॥

दान्तस्थितस्य नस्य चन् शे णस्य टन् षसि टनयोस्तन् से ङस्य कन् षसि स्याद्वा। सञ्छम्भुः सञ्चशम्भुः सञ्शम्भुः सुगण्टषष्ठः सुगण्षष्ठः षट्त्सन्तः षट्सन्तः सन्त्सः सन् सः प्राङ्क्षष्ठः प्राङ् षष्ठः।

५८। चपोऽबे जब् ॥

दान्तस्थितस्य चपस्य जब् स्याद्बे परे। वागीशः चिद्रूपः।

५९। ञमे ञम्वा ॥

दान्तस्थितस्य चपस्य ञमे परे ञम् स्याद्वा। एतन्मुकुन्दः एतद्मुकुन्दः।

६०। त्ये ॥

त्ये मे परे दान्तस्थितस्य चपस्य ञम् स्यान्नित्यं चिन्मयं वाङ्मयं।

६१। शहोश्चपाद्वाम्नि छझभौ ॥

दान्तस्थिताच्चपात्परयोः शहकारयोः क्रमेणाम्नि परे छझभौ वा स्तः। तच्छिवः तच्शिवः वाग्घरिः वाग्हरिः। अम्नि किम् वाक्श्च्योतति।

६२। ह्रस्वाद्ङोऽचि द्विः ॥

खात्परो दान्ते स्थितोणङोद्विः स्यादचि परे। सुगणोशः सन्नच्युतः प्रत्यङ्ङात्मा।

## ६३। छोऽचः॥

अचः परश्छकारोद्विः स्यात्।

## ६४। झप्झसोःखस्झवोश्चप्जवावन्ते च॥

झप्झसयोः स्थाने खस्झयोः परयोः क्रमाच्चपजवौ स्तः विरामे च। शिवच्छाया अच्छा। इति हस्सन्धिपादः।



विसन्धिः।

## ६५। वेः सोऽशसन्ते छते॥

वेः सकारः स्यादशसन्ते छते परे। कृष्णश्चिन्त्यः हरिष्टीकते विष्णुस्त्राता। शसन्ते तु कः त्सरुः।

## ६६। से तु कखपफे वा॥

वेः सकारो वा स्यात् कखपफेषु परेषु से सति। भास्करः भाःकरः भास्खरः भाःखरः भास्पातिः भाःपातिः भास्फरुः भाःफरुः।

६७ । शसि शस् ॥

वेः शस् वा स्यात् शसि परे । हरिश्शेते हरिःशेते सन्तष्षट् सन्तःषट् शिवस्सेव्यः शिवःसेव्यः ।

६८ । कखपफयोर्मून्यौ ॥

वेर्मून्यौ क्रमाद्वा स्यातां कखपफयोः परयोः । हरि×काम्यः हरिःकाम्यः मणे×खनिः मणेःखनिः कृष्णᳶपाता कृष्णःपाता भक्तिᳶफलति भक्तिःपलति ।

६९ । अतोऽह्व्युः ॥

अकारात्परस्य वेरुकारः स्यादकारे हवे च परे । शिवोऽर्च्यः शिवोवन्द्यः ।

७० । अभोभगोऽघोभ्योऽघे लुप् ॥

अवर्णाद्भो भगोऽघोभ्यश्च परस्य वेर्लुप् स्यादघे परे । क दानमस्याः भोहरे भगोरच अघोयज ।

७१ । यवाचि ॥

अवर्णाद्भो भगोऽघोभ्यश्च परस्य वेर्यो वा स्यादचि परे । शिवयुग्रः शिवउग्रः भोयच्युत भोअच्युत ।



७२ । रिचोऽवे ॥

इचः परस्य वे रेफः स्याद्वे परे। हरिरयं चतुर्भुजः।

७३। रोऽचः॥

अचः परस्य रेफस्य वे रेफः स्याद्वे परे। चातरव धातर्गच्छ।

७४। खपि वा॥

अचः परस्य रेफस्य वे रेफः स्याद्वा खपि परे गीर्पतिः गीष्पतिः गीःपतिः।

७५। नाह्नोरकक्रौ॥

अह्नो रेफस्य वे रेफो न स्याद्रेफे के क्रौ च परे। अहोरात्रः अहस्करः अहोभिः।

७६। हस्येतत्तदोऽनञ्कः सेर्लोपः॥

नञ्क्वर्ज्जादेतदस्तदश्च सेर्वैर्लोपः स्यात् हसे परे। एषकृष्णः सविष्णुः। अनञ्कः किं असः शिवः एषको रुद्रः।

७७। ढ्रोर्ढ्रिर्वश्चानुः॥

ढकारस्य ढकारे परे रेफस्य रेफे परे लोपः स्यात्। पूर्व्वस्य च ऋवर्जस्य र्घः। रूढः हरीरम्यः। अनुः किं तृढः। इति विसन्धिपादः।

सन्ध्यध्यायः।

संज्ञा ।

७८ । ले: सि औ जस् अम् औ शस् टा भ्याम् भिस् ङे भ्याम् भ्यस् ङसि भ्याम् भ्यस् ङस् ओस् आम् ङि ओस् सुप् ॥

स्यादीन्येकविंशतिर्लेः पराणि प्रयुज्यन्ते । ज श ट ङ पाः सिङस्योरिकारश्चेतः ।

७९ । त्रिशः प्रीह्वीत्रीचोपीघीम्रः ॥

स्यादीनि त्रीणि त्रीणि क्रमात्प्रीह्वीचीचो-पीघीमी संज्ञानि स्युः ।

८० । सम्बुद्धौ सिर्ह्निः ॥

सम्बोधने विहितः सिर्ह्रिसंज्ञः स्यात् ।

८१ । स्यमौजस् घिः ॥

सि अम् औ जस् एते घिसंज्ञाः स्युः ।

८२ । घिः क्लीबे ॥

नपुंसके शिरेव घिसंज्ञः स्यात् ।

८३ । दान्तवत्सभि ॥

सभयोः परयोर्दान्तवत्कार्य्यं स्यात् ।

८४ । मौ ङिभ्यामोर्डसमुक्पादोन्ते वा ॥

औ परे यत्कार्य्यं वक्ष्यते तच्छ्हमे धोर्भसे स्यात् । अन्ते च तयोः ।

**८५ । हसोऽन्तः फः ॥**

हसो विरामस्य फसंज्ञः स्यात् ।

**८६ । सर्व्वविश्वउभउभयभवत्त्वत्वैकसमसिमनेमाअन्यान्यतरेतरडतर-डत मास्त्यद्तद्यद्एतदिदमदः किं द्वास्मद्युष्मदः पूर्व्वपरावरदक्षिणोत्तरापराधरान्तरस्वाः स्विः ॥**

स्वभेदा गणभेदार्थः । एते पञ्चत्रिंशच्छब्दाः स्विसंज्ञाः स्युः । समोऽतुल्ये व्यवस्थायां पूर्व्वाद्यो ऽत्वान्तरोऽपुरि । बहिर्योगोपसंव्याने स्वस्त्वज्ञातिधनाभिधः ।

**८७ । न गौणाख्याच वोसासे ॥**

गौणत्वे संज्ञायां चेतराः से असे च ते स्विसंज्ञा नस्युः ।

**८८ । चे जसि वा ॥**

चे ते स्विसंज्ञा वा स्युर्जसि परे ।

**८९ । पूर्व्वाद्यल्पप्रथमचरमतयायार्द्धकतिपयनेमाः ॥**

एते सप्तदश शब्दाः खिसंज्ञा वा स्युर्जसि परे।

९० । तीयोङिति ॥

तीयान्तः शब्दः खिसंज्ञः स्याद्वा ङिति परे ।

९१ । पूर्वोऽन्त्यादुङ् ॥

अन्त्यात् वर्णात् पूर्वो वर्ण उङ् संज्ञः स्यात्।

९२ । अन्त्यप्राज्ञादिष्टिः ॥

अन्त्यो योऽच् तदादिवर्णष्टिसंज्ञः स्यात् ।

९३ । लुकि न तत्र ॥

लुगिति लोपे कृते यो लुप्त स्तस्मिन् परे यत्कार्य्यं तन्न स्यात् ।

९४ । स्वरादिनिचित्वत्र व्यं ॥

स्वरादिर्गणो निष्ककारेतस्त्याश्च व्यसंज्ञाः स्युः।

९५ । ह्रस्वोऽनन्तरः स्यः ॥

अचानन्तरितो हसः ससंज्ञः स्यात् ।

९६ । यूत्स्त्रेवदी ॥

ईदूदन्तो नित्यस्त्रीलिङ्गोदीसंज्ञः स्यात् ।

९७ । नास्त्रीयुवः ॥

इयुवस्थानावीदूतौ दीसंज्ञौ नस्तः नतु स्त्री।



९८ । धामि ॥

इयुव इदूञ्च दीसंज्ञो वा स्यादामि परे न तु स्त्री।

९९। स्त्रीयुञ्च ङिति॥

स्त्रीलिङ्ग इदुदन्तो नित्यस्त्रीलिङ्ग इयुव इदूञ्च दीसंज्ञः स्याद्वा ङिति परे न तु स्त्री।

१००। अध्यच् ताच्चेपिः॥

विवर्ज्जस्यादेरचतसंज्ञाव च्यकारावीप्च एते पिसंज्ञाः स्युः।

१०१। संख्यावड्डत्यतुवङ्गगणा-नेपि।

डत्यतु वङ्गगणानां संख्यावत्कार्य्यं स्यान्नत्वीपि॥

इति संज्ञापादः।

---

अजन्त पुंलिङ्ग शब्दः।

रामस् इति स्थिते।

१०२। स्रोर्व्विःफे॥

सकार रेफयोर्विः स्यात् फे परे। रामः। औजसोः सन्धिः। रामौ रामाः।

१०३। स्वदीभ्यां ध्यम्भ्रसादेर्लोपः॥

स्वाद्दीसंज्ञकाञ्च परस्य धेरम्भसादेञ्च लोपः स्यात्। हे राम रामं रामौ।

१०४ । शसनामि र्घः ॥

शसि नामि च परे स्वस्य र्घः स्यात् ।

१०५ । पुंसि तु शस् न ॥

स्वात्परः शस् न स्यात् पुंलिङ्गे । रामान्

१०६ । टाभिस्ङेङसिङसोसामामि नैसयात्स्ययोसोऽतः ॥

अकारात्परेषामेषां स्थाने एते क्रमात्स्युः ।

१०७ । षुर्भ्योऽदान्ते नोऽवकुपवन्तरेऽप्यतद्धात्वपक्व यवाह्वःसखेप्स्वादेनैकाचकोस्तु वा ॥

षकाराद्रेफादृवर्णाच्च परस्मादान्ते स्थितस्य नस्य णः स्यादवकवर्गपवर्ग व्यवधानेऽपि यत्र देनस्ततोऽन्यत्र गतात्तु निमित्तात्परस्य साहिह्वितेनेपा स्यादिना च सहितस्य पक्वादिवर्जितस्य स्यात्, तस्यैकाचः सकवर्गाच्चान्यस्य वा स्यात् । रामेण ।

१०८ । अ आ स्मिभभवि ॥

अकार आकारः स्यात् स्मिभवेषु परेषु । रामाभ्यां रामैः रामाय रामाभ्याम् ।



१०९ । ब्वे सुप्येः ॥

अकार एकारः स्यात् झल्वे सभयोः परयोः । रामेभ्यः रामात् रामाभ्यां रामेभ्यः रामस्य रामयोः ।

११० । नुमामः स्वद्यापसंख्याभ्यां ॥

ह्रस्वाद्द्याश्चापोरषनान्तसंख्यायाश्च परस्यामः आदौ नुम् स्यात् । षं णत्वे । रामाणां रामे रामयोः ।

१११ । किलात् कृतोऽसात् सः षोऽदान्ते नुव्यन्तरेऽपि शासवसघससादाञ्च ॥

कवर्गादिलाञ्च परः कृतः साद्भञ्जौ दमध्यगः सकारः शासादेश्च षः स्यात् नुविव्यवधानेऽपि । एत्वषत्वे । रामेषु । एवं मुकुन्दानन्दगोविन्दादयः ।

११२ । स्मैर्जस्ङेङसिङीनामिस्मै स्मात् स्मिनोऽतः ॥

अकारान्तात् सर्वः परेषामेषां स्थाने एते क्रमात् स्युः । सर्वे सर्वस्मै सर्वस्मात् सर्वस्मिन् ।

११३ । आत् सुमामः ॥



अवर्णान्तात् सर्वः परस्यामः आदौ सुम्

स्यात् । एत्वषत्वे । सर्व्वेषां । शेषं रामवत् । एवं विश्वादयोऽकारान्ताः । उभ शब्दो द्वान्तः । उभौ उभौ उभाभ्यां उभाभ्यां उभाभ्यां उभयोः उभयोः । जसि नेमे नेमाः । शेषं सर्व्ववत् ।

११४ । पूर्व्वादेः स्मात् स्मिनौ वा तौ ॥

पूर्व्वस्मात् पूर्व्वात् पूर्व्वस्मिन् पूर्व्वे । शेषं नेमवत् । एवं परादयः । समोऽतुल्ये इत्यादुक्तेः, नमः समस्मात् पूर्व्वस्मा अन्तरस्मा असेद्दसाम् । सुमेधसामन्तरस्मै सतां स्वस्मै स्वयम्भुवे । ममायैषु परायैषां मुक्तये ऽर्यान्तरायच । यदुस्वाय नमः स्वाय मल्लजुष्टाय शार्ङ्गिणे । अतिसर्व्वाय सर्व्वाय साध्वन्यानां सखिद्विषे । कालावराय कालेन पूर्व्वाय जगतो नमः । जसि, साध्वन्ये साध्वन्याः । जसि । अल्पे अल्पाः । शेषं रामवत् । एवं प्रथमादयः । द्वितीयस्मै द्वितीयाय द्वितीयस्मात् द्वितीयात् द्वितीयस्मिन् द्वितीये । एवं तृतीयः । निर्ज्जरः ।

११५ । जरस्जराचि तु ॥

जराशब्दो जरस् वा स्यादचि परे । निर्जरसौ निर्जरसः निर्जरसं निर्जरसौ निर्जरसः निर्ज-

रसा । केचिदादाविनातामिच्छन्ति । निर्जर-
सिन निर्जरसैः निर्जरसे निर्जरसः निर्जरसात्
इत्यादि । पक्षे हसे च रामवत् ।

११६ । पाद्दन्तयूषनिशाष्टतनामा
सासनसानुनासिकोदकहृदयास्रक्य-
कृत्शकृत्शीर्षदोषः पद्दद्यूषन्निश्ष्ट
न्मासा सन् स्नुनसुदन्हृदसन्यकन्
शकन् शीर्षन्दो वशः शसादिपौ ॥

एषां स्थाने एते क्रमात् स्युर्वा शसादौ पौ
च परे । पदः पदा पद्भ्यां इत्यादि । दतः
दता दद्भ्यां इत्यादि ।

११७ । सदानोऽल्लोपोऽम्बस्मात् पौ
वा त्वीङ्योः ॥

अनोऽकारस्य नित्यं लोपः स्यात्पौ परे ईङ्योस्तु
वा नतु मस्मादस्माच्चपरस्य । यूष्णः यूष्णा ।

११८ । नोल्लप्फेऽघौ ॥

नस्य लुप् स्यादधौ फे परे । यूषभ्यां इत्यादि ।
ङौ । यूष्णि यूषणि यूषे । मासः मासा माभ्यां
इत्यादि । पक्षे घौ च रामवत् । पदादयः पृथक्-
शब्दा इत्येके ।

११९। संख्याविसायाद्वाह्नोऽह्नन् ङौ॥

संख्याविसायेभ्यः परस्याह्न इत्यस्याह्नन्वा स्यात् ङौ। द्व्यह्नि द्व्यहनि द्व्यह्ने। व्यह्नि व्यहनि व्यह्ने। सायाह्नि सायाहनि सायाह्ने। विश्वपाः विश्वपौ विश्वपाः विश्वपां विश्वपौ।

१२०। धोरालोपोऽच्यघौ॥

धोराकारस्य लोपः स्यादघावचि परे। विश्वपः विश्वपाः विश्वपाभ्यां इत्यादि। एवं शङ्खध्मादयः। धो: किं। हाहाः हाहाः हाहाभ्यां इत्यादि। शेषं विश्वपावत्। हरिः।

१२१। यद्व्रामौ यू॥

इकारोकाराभ्यां परः औः क्रमादिकारोकारौ प्राप्नोति। हरी।

१२२। मूर्धि जस्ङित्सु॥

इदुतोर्गुणः स्याद्धौ जसि ङिति च परे। हरयः। त्यलोपे त्यलक्षणम्। हे हरे। हरिं हरी हरीन्।

१२३। टादसख्याखियान्तु ना॥

इदुद्भ्यामदसश्च परष्टा ना स्यान्नतु स्त्रियां।

हरिणा हरिभ्यां हरिभिः हरये हरिभ्यां
हरिभ्यः ।

१२४ । ङस्यैङोलोपः ॥

एङः परस्य ङसिङसोर्ङस्य लोपः स्यात् ।
हरेः हरिभ्यां हरिभ्यः हरेः हर्य्योः हरीणां ।

१२६ । युद्भ्यां ङेर्डौः ।

इदुद्भ्यां परस्य ङेर्डौः स्यात् डइत् ।

१२५ । टेर्लोपोडितिविंशतेस्तेस्त्वङौ ॥

डिति परे पूर्व्वस्य टेर्लोपः स्याद्विंशतेस्तेस्त्वङौ ।
हरौ हर्य्योः हरिषु । एवं श्रीपत्यग्निरव्यादयः ।

१२७ । सख्यृद्भ्यां सेर्डाधेः ॥

सखि शब्दादृकारान्ताच्च परस्य सेर्डा स्यान्नतु
धेः । सखा । अधेः किं हे सखे ।

१२८ । घौ त्रिः ॥

सख्युर्ऋकारस्य च त्रिः स्यात् घौ परे । सखायौ
सखायः सखायं सखायौ सखीन् ।

१२९ । सख्युष्टाङितामा ए ङसुसौ ॥

सख्युः परेषां टाङितां स्थाने आ ए ङस् ङस्

३

औ एते क्रमात् स्युः । सख्या सख्ये सख्युः सख्यौ । शेषं हरिवत् ।

१३० । पत्युरसे ॥

पतिशब्दात्परेषां टाङितां स्थाने आ ए उस् उस् औ एते क्रमात् स्युर्नतु से । पत्या पत्ये पत्युः पत्युः पत्यौ । असे किं, श्रीपतिना इत्यादि । शेषं हरिवत् । कति शब्दो व्यान्तः ।

१३१ । डतिसंख्याष्णोजसमसोर्लुक् ॥

डत्यन्तात् षान्त नान्त संख्यायाश्च परयोर्जसमसोर्लुक् स्यात् । कति कति कतिभिः कतिभ्यः२ कतीनां कतिषु एवं यति तति । डतिव्यष्णान्त संख्याशब्दास्त्रिषु सदृशा स्त्रिषु । त्र्यादयः संख्याशब्दा व्यान्ताः ।

१३२ । त्रेस्त्रयङ् नामि ॥

त्रिशब्दस्यायङ् स्यान्नामि परे ङित्त्वादन्त्यस्य स्थाने त्रयाणां त्रिषु । द्विशब्दो द्व्यन्तः ।

१३३ । त्यदां टेरः सौ ॥

त्यदादीनां टेरकारः स्यात् सौ परे । द्वौ२ द्वाभ्यां३ द्वयोः२ । वातप्रमीः वातप्रम्यौ वातप्रम्यः ।

१३४ । यूलोऽम्शसोर्न्नीवदीधोः ॥

दीधुवर्ज्जीदीदूदन्तात्परयोरमशसोः स्थाने क्रमान्मनौ स्तः । वातप्रमीं वातप्रम्यौ वातप्रमीन् वातप्रम्या वातप्रमीभ्यां इत्यादि । एवमतिलक्ष्म्यादयः । सुधीः ।

१३५ । धोरियुवचि ॥

धोरीदूतोः स्थाने क्रमादियुवौ स्तोऽचि परे । सुधियौ सुधियः इत्यादि । एवं सुश्रीयवक्रयादयः । प्रधीः ।

१३६ । कव्याद्यनेकाचोऽस्यादृहन्पुनर्वर्षाकाराद्यभूसुधियोर्यवौ ॥

कादेर्व्यादेरनेकाचश्च धोरीदूतोरस्यात्परयोः क्रमाद्यवौ स्तोऽचि परे । नतु दृन्भू पुनर्भू वर्षाभू काराभूभ्योऽन्यस्य भू शब्दस्य सुधियश्च । प्रध्यौ प्रध्यः इत्यादि । एवं दीध्यादयः । कव्याद्यनेकाचः किं । शुद्धियवौ । अस्यात् किं यवक्रियौ । नीः नियौ ।

१३७ । न्यापदीभ्योङेराम् ॥

नीशब्दादापोदीश्च परस्य ङेराम् स्यात् ।

नियां । शेषं सुधीवत् । अग्रणीः अग्रण्यौ । ङौ अग्रण्यां । शेषं प्रधीवत् ।

१३८ । ततजखादीयोङ्ग्वोः ॥

तत्तस्थानजाद्वर्णात् खाच्च परादीकारजादूयकारात्परो ङसि ङसोर्ङः स्याद्वा । सुत्युः सुत्यः । लून्युः लून्यः । सुख्युः सुख्यः । शम्भुर्हरिवत्साध्यः । शम्भुः शम्भू शम्भवः शम्भुं शम्भू शम्भून् शम्भुना शम्भुभ्यां शम्भुभिः शम्भवे शम्भुभ्यां शम्भुभ्यः शम्भोः शम्भुभ्यां शम्भुभ्यः शम्भोः शम्भ्वोः शम्भूनां शम्भौ शम्भ्वोः शम्भुषु हे शम्भो । एवं घिष्णु वायुभान्वादयः ।

१३९ । क्रोष्टोस्तुनस्तृन्नधौ घौ स्त्रियाञ्च ॥

क्रोष्टु शब्दस्य तुनः स्थाने तृन स्यादधौ घौ परे स्त्रियाञ्च नद्वत् । १२५ सख्यङ्ग्यामिति । क्रोष्टा हे क्रोष्टो । १२६ सौब्रिः । क्रोष्टारौ क्रोष्टारः क्रोष्टारं क्रोष्टारौ क्रोष्टून् ।

१४० । वाच्यवौ ॥

क्रोष्टोस्तुनस्तृन्वास्यादघावचि परे । क्रोष्ट्रा ।

१४१। ऋतेङोड़ुः॥

ऋकारात्परो ङसिङसोर्ङो ड़ुः स्यात् ड इत्।
क्रोष्टुः२ क्रोष्ट्रोः क्रोष्टूनां।

१४२। ऋुर्ङिघ्योः॥

ऋकारस्य गुणः स्यात्ङौ घौ च परे। क्रोष्टरि
क्रोष्टो पक्षे हये च शम्भुवत्। हूहूः हूहै।
हूहूरित्यादि वातप्रमीवत्। एवमतिचम्वा-
दयः। सुभूः सुभुवौ सुभुवइत्यादि सुधीवत्।
एवङ्कटप्रूस्वयम्भ्वादयः। सुलूः सुल्वौ सुल्वः
इत्यादि प्रधीवत्। एवं दृन्भूखलप्वादयः। धाता
त्वनन्तक्रोष्टुवत्। धौ हे धातः। एवं नप्तृ
होतृपोत्रादयः। पिता हे पितः। पिता
माता ननन्दा ना सव्येष्टृभ्रातृयातरः। जा-
माता दुहिता देवा न त्वनन्ता इमे दश।

१४३। घावस्वस्तृत्वणोः॥

घौ परे ऋकारस्य णः स्यान्नतु स्वस्तृत्वणोः।
पितरौ पितरः पितरं पितरौ। शेषं धातृ-
वत्। एवं जामातृभ्रात्रादयः।

१४४। नुर्वानामि घः॥

नृशब्दस्य नामि प्ररतोर्धः स्याद्वा । नृणां नृणां शेषं पितृवत् ।

१४५ । ओरौधौ ॥

ओकारस्य औकारः स्याद्धौ परे । गौः गावौ गावः ।

१४६ । आ अम् शसोः ॥

ओकार आकारः स्यादमि शसि च परे । गां गावौ गाः गवा गोभ्यां इत्यादि । १२४ ङस्यै-ङोर्लोपइति । गोः गोः ।

१४७ । रैरासभि ॥

रैशब्दो राः स्यात्सि भे च परे । राः रायौ रायः राभ्यां इत्यादि । ग्लौः ग्लावौ ग्लावः इत्यादि ।

इति अजन्तपुंलिङ्गपादः ।



## अजन्त स्त्रीलिङ्ग शब्दः ।

१४८ । आबीब्भसात् सेर्लोपः ।

आप ईपो हसाच्च परस्य सेर्लोपः स्यात् ।

रमा ।

१४९ । औङ आपः ॥

आपः पर औङी स्यात् । उमे उमाः ।

१५० । आङि चापः ॥

आप एः स्यादाङि ओसि च परतः । हे उमे उमां उमे उमाः उमया उमाभ्यां उमाभिः ।

१५१ । याडापः ॥

आपः परेषां ङितां याट् स्यात् वृद्धिः । उमायै उमाभ्यां उमाभ्यः उमायाः उमाभ्यां उमाभ्यः उमायाः उमयोः उमानां । १३७ ङेराम्नद्याम्नीभ्यो ङेरामिति । उमायां उमयोः उमासु । एवं दुर्गामायाम्बिकादयः ।

१५२ । सर्वनाम्नः स्याड्ढ्रस्वश्च ॥

सर्वनाम्नः आबन्तात्परेषां ङितां स्याट् स्यात् पूर्वस्य च ह्रस्वः । सर्व्वस्यै सर्व्वस्याः २ सर्व्वस्यां । आमि सर्व्वासां । शेष रमावत् । एवं विश्वादय आबन्ताः । अपरीत्युक्तेः । अन्तरायै नगर्यै । द्वितीयस्यै द्वितीयायै द्वितीयस्याः द्वितीयायाः द्वितीयस्यां द्वितीयायां । शेषमुमावत् । एवं तृतीया ।

१५३। सुभ्रूङोद्द्रजस्वार्थानां धौ स्वः॥

सुभ्रुवोद्याद्दजस्वार्थानाञ्च स्वः स्याद्धौ परे। हे अम्ब। धेषसुभावत्। एवमक्कालल्लादयः। द्ररवः किं हे अम्बाडे हे अम्बाले हे अम्बिके। जरा। ११३ जरस् जराचितु। जरसौ। केचिदादावोत्वमिच्छन्ति। जरसौ जरे जरसः जराः इत्यादि। ११४ पाददन्तेति नासिकाष्ट-तमानिशानां नसृष्टन्निशः। नसः नसा नोभ्यां इत्यादि। ष्टतः ष्टता ष्टद्भ्यां इत्यादि। निशः निशा।

१५४। श क्राजभ्राजयजव्रजस्रज-मजव्रश्चभ्रस्जां षड् भौ॥

शान्तानां छान्तानां राजादेश्च षड्स्याद्भौ परे।

१५५। षोडः फे॥

षस्य डः स्यात् फे परे। निड्भ्यां इत्यादि। पत्ये घौ चोमावत्। गोपा विश्वपावत्। मतिर्हरि-वत्। स्त्रीत्वान्न शस् न टा ना। मतीः मत्या।

१५६। द्याङ्तिामम्॥

ह्याः परेषां ङितामम् स्यात् म इत् । मत्यै मतये मत्याः मतेः मत्यां मतौ । एवं श्रुतिस्मृतिबुद्ध्यादयः ।

## १५७ । स्त्रियां त्रिचतुरोस्तिसृच-तसृ ऋटवत् क्तौ ॥

त्रिचतुरोः स्त्रीलिङ्गे क्रमात्तिसृचतसृौ स्तः क्तौ परे । तौ च ऋवत् तेन न गुणविर्घाः । तिस्रः२ तिसृभिः तिसृभ्यः२ तिसृणां तिसृषु। टेरत्वे सत्याप् । हे२ द्वाभ्यां३ द्वयोः२ । गौरी गौर्य्यौ गौर्य्यः हे गौरि गौरीं गौर्य्यौ गौरीः गौर्य्या गौरीभ्यां गौरीभिः । १५७ ह्याङ्कितामम् । गौर्य्यै गौरीभ्यां गौरीभ्यः गौर्य्याः गौरीभ्यां गौरीभ्यः गौर्य्याः गौर्य्योः गौरीणां गौर्य्यां गौर्य्योः गौरीषु। एवं वाणीकालीनद्यादयः । लक्ष्मीरनीवन्तत्वान्न सिलोपः । शेषं गौरीवत् । एवमवीतन्द्र्यादयः ; स्त्री । हे स्त्रि ।

## १५८ । स्त्री भ्रूर्धुः ॥

स्त्रीशब्दो भ्रूशब्दश्च धुसंज्ञः स्यात् । १३५ धोरियुवचि । स्त्रियौ स्त्रियः ।

१५८ । स्त्रीवाम्श्र्सोः ॥

स्त्रीशब्दोऽधुसंज्ञो वा स्यादमि श्र्सि च परे । स्त्रियं स्त्रीं स्त्रियौ स्त्रियः स्त्रीः स्त्रिया स्त्रीभ्यां स्त्रीभिः स्त्रियै स्त्रीभ्यां स्त्रीभ्यः स्त्रियाः स्त्रीभ्यां स्त्रीभ्यः स्त्रियाः स्त्रियोः स्त्रीणां स्त्रियां स्त्रि-योः स्त्रीषु । श्रीः श्रियौ श्रियः । ङित्यामिच भेदः। श्रियै श्रिये श्रियाः श्रियः श्रियाः श्रियः श्रीणां श्रियां श्रियां श्रियि श्रीषु । सुध्यादयः पुम्वत् । सुष्ठु धीः प्रकृष्टा धीरिति नित्य स्त्रीत्वे सुधीप्रध्यौ श्रीलक्ष्मीवत् । धेनुर्मतिवत्साध्यः । धेनुः धेनू धेनव इत्यादि । वधूर्गौरीवत् । वधूः वध्वौ वध्वः इत्यादि । एवं चमूतन्वादयः । भ्रूः श्रीवत् । भ्रूः भ्रुवौ भ्रुवः इत्यादि । सुभ्रूः हे सुभ्रु । पुनर्भूः सुलूवत् । सुभ्रूः पुम्वत् । स्वसा धातृवत् । माता पितृवत् । द्यौर्गौवत् । सुराः पम्वत् । नौः ग्लौवत् ।

इति अजन्त स्त्रीलिङ्गपादः ।

.........

## अजन्त क्लीवलिङ्ग शब्दः।

१६०। क्लीवात् स्यमोऽधेर्मोऽतः॥

अकारान्तान्नपुंसकात्परस्याधेः सेरमस्य मः स्यात्। ज्ञानं हे ज्ञान।

१६१। क्लीवादौः॥

क्लीवात्परश्चौरीः स्यात्। ज्ञाने।

१६२। जस्शसोः शिः॥

क्लीवात्परस्य जसः शसश्च शिः स्यात् शइत्।

१६३॥ नुम्यमादौ झसन्तरलादौ नु वा।

क्लीवस्य शौ परे नुम् स्यात् न तु यमादौ झसन्तरलयोरादौ तु वा स्यात्।

१६४। नसत्महन्तोऽणोर्घोऽधैघौ॥

नसन्तस्यापो महतो नान्तस्य च धुवर्जस्य र्घः स्यादधौ धौ परे। ज्ञानानि। डौ पीवत्। शेषं रामवत्। एवं वनधनफलादयः।

१६५। तोऽन्यादेर्मोऽनेकतरात्॥

अन्यादेः परस्य स्यमोर्मस्य तः स्यात्। नत्वे-कतरात्परस्य। अन्यत् अन्ये अन्यानि हे अन्य।

पुनस्तद्वत् । शेषं पुम्वत् । एवमन्यतरादयः । अनेकतरात्किं । एकतरं ।

१९६ । जरातोऽम्वा ।

जराशब्दात्परस्य स्यमोर्मस्याम् स्याद्वा । अजरसं अजरं अजरसी अजरे अजरांसि अजराणि । पुनस्तद्वत् । शेषं पुम्वत् । ११६ पाद-दन्तेति शीर्षहृदयोदकासनानां शीर्षन्हृदुद-नासन् । शीर्षाणि शीर्ष्णा शीर्षभ्यां इत्यादि । हृन्दि हृदा हृद्भ्यां इत्यादि । उदानि उद्ना उद्भ्यां इत्यादि । आसानि आस्ना आसभ्यां इ-त्यादि । पत्ने शेषे च ज्ञानवत् ।

१९७ । क्लीवे स्वः ।

क्लीवे घस्य स्वः स्यात् । शेषं ज्ञानवत् ।

१९८ । स्यमोर्लुक् ।

क्लीवात्परयोः स्यमोर्लुक् स्यात् । वारि ।

१९९ । नुस्मिकोऽच्यनामि ।

इगन्तस्य क्लीवस्य नुण् स्यादचि परे नत्वामि । वारिणी वारीणि ।

१७० । णुर्धीवा ।

इगन्तस्य क्लीवस्य णुर्व्वा स्याङ्गौ परे । हे वारे हे वारि वारिणी वारीणि वारिणा वारिणे वारिणः वारिणः वारिणोः वारीणां वारिणि वारिणोः । हसे हरिवत् ।

१७१ । पुम्बद्वार्थोक्तपुंस्कं टाद्यचि ।

इगन्तं क्लीवं अर्थेन प्रोक्तपुंस्कं पुम्बद्वा स्याट्टाद्यचि । अनादये अनादिने इत्यादि । शेषं वारिवत् । अर्थेन किं पीलुने फलाय ।

१७२ । दध्यस्थिसक्थ्यक्ष्णोऽनङ् ॥

एषामनङ् स्यात् टाद्यचि । अङावितौ । २१७ अनोऽल्लापः । दध्ना दध्ने दध्नः२ दध्नोः दध्नां दध्नि दधनि दध्नोः । शेषं वारिवत् । एवमस्थि सक्थि अक्षि । सुधि सुधिनी सुधीनि । ह्रीप्रीवत् । सुधिया सुधिना इत्यादि । एवं प्रध्यादयः । मधु मधुनी मधूनि हे मधो हे मधु । ह्रीप्रीवत् । मधुना मधुभ्यां इत्यादि । एवमम्बुसान्वादयः । ११६ पाददन्तेति स्नुवा । स्नूनि मानानि इत्यादि भेदः ।

धातृ धातृणी धातॄणि । धौ हे धातः हे धातृ । द्वी प्रीवत् । धात्रा धातृणा इत्यादि । एवं ज्ञातृकर्त्रादयः ।

१७३ । एचोयुतह्रस्वं ॥

प्रद्यु प्रद्युनी प्रद्यूनि । द्वी प्रीवत् । हे प्रद्यो हे प्रद्यु प्रद्यवा प्रद्युना इत्यादि । सुरि सुरिणी सुरीणि धौ हे सुरे हे सुरि सुराया सुरिणा सुराभ्यां इत्यादि । सुनु सुनुनी सुनूनि धौ हे सुनो हे सुनु सुनावा सुनुना इत्यादि । नपुंसकपादः । इत्यजन्ताध्यायः ।



## हसन्त पुंलिङ्गशब्दः ।

१७४ । द्विकृतजक्षादी द्विः ॥

कृतद्वित्वशब्दोजक्षादिश्च द्विसंज्ञः स्यात् ।

१७५ । होढोभौ ।

हस्य ढः स्याद्भौपरे । १४८ भावीव्भसात्ले- लोपः । ६४ झ झझोरिति चपजवौ वा । लिट् लिड् लिहौ लिहः लिहं लिहौ लिहः लिहा लिड्भ्यां इत्यादि ।

१७६ । दादेर्घः ।

दकारादेर्हस्य घः स्याज्झौपरे ।

१७७ । झभान्तस्यादिजबां झभाः फे धोस्तु सध्वेऽन्तेच ॥

झभान्तस्यादौ स्थितानां जबानां झभाः स्युः फे परे धोस्तु सध्वेऽन्तेच । धुक् धुग् दुहौ दुहः दुहं दुहौ दुहा धुग्भ्यां इत्यादि ।

१७८ । मुहां घङ् वा भौ ॥

मुहादीनां घङ् वा स्याज्झौ परे । मुक् मुग् मुट् मुड् मुहौ मुहः मुहं मुहौ मुहः मुहा मुग्भ्यां मुड्भ्यां इत्यादि एवं द्रुहस्नुहनश-ष्णिहः ।

१७९ । वाहोवौ पौ श्वेतात्तु वा ॥

वाहोवाशब्दस्य औः स्यात्पौ परे श्वेतवाहस्तु वा । विश्वौहः विश्वौहा इत्यादि । शेषं लिड्वत् ।

१८० । अनादूः ॥

अनवर्णात्परोवाहोवा ऊः स्यात्पौ परे । भूहः भूहा इत्यादि ।

### १८१। अनडुच्चतुरोऽणाणौ धिघ्योः ।

अनडुहश्चतुरश्च धौ परेऽण् घौ परे आण् स्यात् णदूत् ।

### १८२ । होनः सौ ।

अनडुहोहस्य नः स्यात् सौ परे । अनड्वान् हे अनड्वान् अनड्वाहौ अनड्वाहः अनडुहः अनडुहा ।

### १८३ । स्रस्ध्वस्वस्वनडुहां दङ्फे ।

एषां दङ् स्यात् फे परे ङावितौ । अनडुद्भ्यां इत्यादि ।

### १८४ । श्वेतवाहऽवयाजुक्थशास् पुरोडाशां डसङ् ।

एषामन्तस्य डसङ् स्यात् फे परे ङावितौ ।

### १८५ । अत्वसोऽधोःसौ घोऽधौ ।

अत्वन्तस्य । सन्तस्य च घः स्यादधौ सौ परे नतु धोः । श्वेतवाः ।

### १८६ । डसङोधौवा ॥

डसङोधौ परे घौ वा स्यात् । हे श्वेतवाः हे

श्वेतवाः श्वेतवाहौ श्वेतवाहः श्वेतवाहं श्वेत-
वाहौ श्वेतौहः श्वेतौहा श्वेतवोभ्यां इत्यादि।
१११ क्विलादिति षः। तुराषाट् तुराषाड्
तुरासाहौ तुरासाहः तुरासाहं तुरासाहौ
तुरासाहः तुरासाहा तुराषाड्भ्यां इत्यादि।
चत्वारः चतुरः चतुर्भिः चतुर्भ्यः२। नुमाम
इति चतुर्णां।

## १८७। रङोविः सुपि।

रङोविःस्यात् सुपि नत्वन्यरेफस्य। चतुर्षु।
प्रियचत्वाः हे प्रियचत्वः प्रियचत्वारौ प्रियच-
त्वारः प्रियचत्वारं प्रियचत्वारौ प्रियचतुरः
प्रियचतुरा प्रियचतुर्भ्यां इत्यादि। १६४ नस
व्महन्न इति षंत्वे नोलुप्। राजा हे राजन्
राजानौ राजानः राजानं राजानौ। ११७
अनोऽल्लोपः। राज्ञः राज्ञा राजभ्यां इत्यादि।
ङौ। राज्ञि राजनि अम्बस्यादित्युक्तेः। ब्र-
ह्मणः यज्वनः इत्यादि। शेषं राजवत्।

## १८८। हनपूषार्य्यमेनोऽधौ सौ शौ षंः॥

एषां र्घः स्यादधौ सौ परे शौ च। वृत्रहा हे वृत्रहन् वृत्रहणौ वृत्रहणः वृत्रहणं वृत्रहणौ।

१८९। हनोह्नोघ्नोन णः॥

हनस्थाने जातस्य ह्नस्य घ्नः स्यात्। तस्य च नस्य णोन स्यात्। वृत्रघ्नः वृत्रघ्ना वृत्रहभ्यां इत्यादि। एवं पूषन्नर्य्यमन्शार्ङ्गिन्यशस्विन्प्रभृतयः।

१९०। पूष्णोङिर्ङिर्वा॥

पूषि पूष्णि पूषणि।

१९१। मघोनस्तुङ् वा क्विप्योः॥

मघवन्शब्दस्य तुङ्वा स्यात् क्वौ पौच परे उङावितौ।

१९२। त्रिदचोऽह्रे नुणघौ।

उकारेत ऋकारेतोऽचस्य नुण् स्याद्घौपरे नतु ह्रेः।

१९३। स्यान्तस्याराल्लुप् फे॥

स्यस्यान्तस्य लुप् स्यात् फे परे नतु रात्परस्य। मघवान् मघवा हे मघवन् मघवन्तौ मघवानौ

मघवन्तः मघवानः मघवन्तं मघवानं मघवन्तौ मघवानौ ।

## १९४ । श्वयुवमघोनामुवौंऽतेघौ ।

एषां वशब्दस्य उः स्यात्घौ परे नतु ते । मघवतः मघोनः मघवता मघोना मघवद्भ्यां मघवभ्यां इत्यादि । शुनः शुना । यूनः यूना इत्यादि । शेषं राजवत् अर्व्वा हे अर्व्वन् ।

## १९५ । अर्व्वणोऽनञस्तुङ् त्यऽसौतु॥

नञ्वर्ज्जस्यार्व्वणो नस्य तुङ्स्यादसौ त्ये परे । अर्व्वन्तौ अर्व्वन्तः अर्व्वन्तं अर्व्वन्तौ अर्व्वतः अर्व्वता अर्व्वद्भ्यां इत्यादि । अनञः किं । अनर्व्वा हे अनर्व्वन् अनर्व्वाणौ अनर्व्वाणः इत्यादि । शेषं यज्ववत् ।

## १९६ । पथिमथ्यृभुक्षां थितोर्नमौ घौ ॥

पथिन्मथिन् ऋभुक्षिन् एषां थस्य नम् स्यादिकारस्य चाकारः । घौ परे ।

## १९७ । टेरा सौ ॥

पथ्यादीनां टेरा स्यात् सौ परे। पन्थाः प-न्थानौ पन्थानः पन्थानं पन्थानौ ।

१९८ । लोपोऽच्यघौ ॥

पथ्यादीनां टेर्लोपः स्यादघावचि परे। पथः पथा पथिभ्यां इत्यादि । एवं मन्थाः ऋभुक्षाः । १२१ डतिसंख्यार्ष्णा इति । पञ्च पञ्च पञ्चभिः पञ्चभ्यः २ ।

१९९ । नोनामि घः ॥

नान्तस्य नामि परे घः स्यात् । पञ्चानां पञ्चसु ।

२०० । वाष्टनोजस् शसोर्डौः ॥

अष्टनः परयोर्जस्शसोर्डौः स्याद्वा डइत् । अष्टौ अष्ट अष्टौ अष्ट ।

२०१ ङा क्वौवा ॥

अष्टनोङा स्याद्वा क्वौ परे ङइत् । अष्टाभिः अष्टभिः अष्टाभ्यः अष्टभ्यः अष्टाभ्यः अष्टभ्यः अष्टानां अष्टासु अष्टसु ।

२०२ । धोर्मेनः फम्वि ॥

धोर्मस्य नः स्यात् फे मे वे च परे। प्रशान्

प्रशामौ प्रशामः   प्रशामं प्रशामौ प्रशान्भ्यां इत्यादि।

## २०३। इदमोऽयमियं पुंस्त्रियोः सौ॥

इदमः पुंलिङ्ग स्त्रीलिङ्गयोः क्रमेणायमियमौ स्तः सौपरे अयं।

## २०४। दोमोऽदसश्च क्तौ॥

इदमोऽदसश्च दस्य मः स्यात् क्तौ परे। इमौ इमे इमं इमौ इमान्।

## २०५। टौसीदमोऽनकोऽनः॥

अनक इदमष्टौसोः परयोरनः स्यात्। अनेन।

## २०६। स्भ्यः॥

अनक इदमो अः स्यात् से भे च परे। २०७ आक्तिमभवि। आभ्यां।

## २०७। भिस्भिसोऽदसश्च॥

अनक इदमोऽदसश्च परस्य भिसो भिसेव स्यान्नत्वैस्। १०६ व्वेस्भ्ये। एभिः। १३६ टेत्वे। २०५ दस्यमत्वे। ११२ ङेस्मै पश्चादः।

अस्मै आभ्यां एभ्यः अस्मात् आभ्यां एभ्यः अस्य अनयोः एषां अस्मिन् अनयोः एषु । अनकः किं ।

२०८ । त्यादिव्यासभोस्त्क्तिस्विस्वे-ष्वीक् प्राक् टेर्व्यंकदस्य ॥

त्याद्यन्तस्य व्यस्य सभओस्वर्ज्जंत्यन्तस्वेः स्वेश्च टः पूर्व्वोऽक् स्याद्वा व्यकस्य दस्य । इमकेन इमकाभ्यां इमकैः इत्यादि ।

२०९ । द्वोटौसोर्दैतयोरेनोनूक्तौ ॥

द्वयां टौसोश्च परत इदमेतदोरिदैतयोरेनः स्यादुक्तस्य पश्चादुक्तौ । इमं विद्धि हरेर्भक्तं विद्ध्यैनं शिवार्च्चकं । इमाविमान् वित्त शैवानेनावेनांस्तु वैष्णवान् । अनेन पूजितः कृष्णोऽयैनेन गिरिशोऽर्च्चितः । अनयोः केशवः स्वामी शिवः स्वामी अथैनयोः । १३३ त्यदां टेरः क्तौ । कः कौ के इत्यादि । १७८ झभान्तस्येति वस्य भः । भुत् ऽद् वधः वधा मद्भ्यां इत्यादि ।

२१० । युजिरोऽसे नुम् घौ ॥

युजिरोयुज्शब्दस्य नुम् स्याद्घौ परे नतु से ।

२११ । चुङ्क्रुङ्युङ्स्रग्दिग्दृग्-त्विक्दृष्टक्दृक्स्पृक् स्रगुष्णिहां कुङ् भौ ॥

चवर्गान्तानामश्वादीनाञ्च कुङ् स्याज्झौ परे । ५० स्नोर्नुर्भस्यदान्ते । ५१ ञपे ञस्नोः । १६४ स्यान्तस्यारल्लुप् फे । युङ् युञ्जौ युञ्जः युञ्जं युञ्जौ युजः युजा युग्भ्यां इत्यादि । असे किं सुयुक् सुयुजौ सुयुजः इत्यादि । युजिरः किं युक् समाधिमान् । अन्तुक्रुञ्चयुजामेव प्राक्कुङ् पृथक् ग्रहणात् । तेन खन् खञ्जौ खञ्जः इत्यादि ।१५४ शच्छ । जेतिषङ । १५५ षोडः फे । राट् राड् राजौ राजः । एवं विभ्राट् देवेट् परिव्राट् विश्वसृट् परिमृट् ।

२१२ । विश्वराजोऽदा ॥

विश्वराजोऽकारस्य आ स्याज्झौ परे । विश्वाराट् विश्वाराड विश्वराजौ विश्वराजः ।

२१३। स्यादेः सोलोंपः कोऽघटन्य। रचः

स्यादौ स्थितस्य सस्य लोपः स्याद्नौ परे कस्य च नतु षष्ठांश्यामन्यस्य स्थाने जातस्य रचस्य। भ्रट् भ्रड्। ६४। झपझसोरिति सस्य दः। ४६ स्नुस्नुभिः स्त्रघादिति। भ्रज्जौ भ्रज्जः इत्यादि। ऊर्क् ऊर्ग् ऊर्ज्जौ ऊर्ज्जः इत्यादि। अवयाः हे अवयाः हे अवयः अवयाजौ अवयाजः अवयोभ्यां इत्यादि।

२१४। त्यदां तदोः सः सौ॥

त्यदादीनां तदयोः सः स्यात् सौ परे। स्यः त्यौ त्ये इत्यादि सर्व्ववत्। एवं तद्। एषः एतौ एते इत्यादि। २१८ द्वौटौसीटैतयोरेनोन्क्वाविति प्रयोगस्तु इदम्वत्।

२१५। युष्मदस्मदोस्त्वाहौ युवावौ यूयवयौ त्वन्मदौ तुभ्य मह्यौ तवममौ सिद्वजस्ङेङस्सु॥

अनयोः क्रमादेते आदेशा एषु क्रमात् स्युः।

२१६ । ङेप्र्थ्योर्म् ॥

युष्मदस्मद्भ्यां परस्य ङे इत्यस्य चेश्चमः स्यात् । त्वं अहं ।

११७ । सम्मौप्वाङ् ।

युष्मदस्मदोराङ् स्यात्से मे अमि औकारे च परे । युवां आवां यूयं वयं त्वां मां युवां आवां ।

२१८ । शसभ्यसङसिभ्यम्नस्-सामां नङभ्यम्ततङाकमः ।

युष्मदस्मद्भ्यां परेषामेषां स्थाने न ङभ्यम् त त ङ आकम् एते क्रमात् स्युर्ङत् । युष्मान् अस्मान् ।

२१९ । एङ्टाङ्याम्मि ।

युष्मदस्मदोरेङ् स्याट्टाङ्योः परयोरामि च ङत् । त्वया मया युवाभ्यां आवाभ्यां युष्माभिः अस्माभिः तुभ्यं मह्यं युवाभ्यां आवाभ्यां युष्मभ्यं अस्मभ्यं त्वत् मत् युवाभ्यां आवाभ्यां युष्मत् अस्मत् तव मम युवयोः आवयोः युष्माकं अस्माकं । अतित्वयां अतिमयां अतियुवयां अत्या

वयां अतियुष्मयां अत्यस्मयां । कद्दयोरर्थस्यापि ग्रहणात् । एवं सर्व्वत्र त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु ।

२२०। द्वीचीषोणां कैद्वैर्व्वै स्तेमे वांनौ वस्नसौ वापादवाक्यादावचवाहाहैवाद्दृ गृद्दृश्यर्थैस्त्वामात्वमा ।

युष्मदस्मदोर्द्वीचीषोणां कैः सहितयोस्तेमे द्वैर्वांनौ व्वैर्वस्नसौ क्रमाद्वा स्यातां । अमायुक्तयोस्तु त्वा मा । नतु पादस्य वाक्यस्य चादौ स्थितयोर्नचवाद्यैरदर्शनार्थं दृश्यर्थं धुभिश्च योगे। दामोदरस्त्वावतु मापि मित्र ! ददातु ते मेऽपि सुदं मुकुन्दः । निहन्तु ते विष्णुरघानि मेऽपि रक्षत्वसौ वामपि नौ मुरारिः । ददातु वां नावपि शर्म्म कृष्णः करोतु वां श्रीदयितोदयां नौ । पुष्णातु वो नोऽपि हरिर्धनं वो ददातु नो हन्त्वशुभानि वो नः । अपादवाक्यादौ किं युष्मानवत्वविरतं कृष्णोऽस्मान् पातु शङ्करः अचादियोगे किं तुभ्यं मह्यञ्च ददात् स्वं गोविन्दो मह्यमेव शं । श्रीकण्ठोमामपेक्ष्य त्वामालोकयति पूजकम् ।

२२१। सदानूक्तोऽसादिमाः॥

अनयोरेते अन्वादेशे नित्यं स्युर्नतु सपूर्व्वात् पून्तात् परयोः। यूयं वयं विनीतास्तत् पातु वोनो महेश्वरः। ययं वयं हितास्तेन सोऽस्मान् पातु सवः शिवः।

२२२। नाविशेष्यान्याद्यामन्त्रात्॥

विशेष्यपूर्व्वमनामन्त्रपूर्व्वस्य हित्वान्यस्मादामन्त्रादेते आदेशान स्युः। शम्भोऽस्मान्रच्च लक्ष्मीश सेव्य नोऽवाव सर्व्वं नः। सुपात् सुपादौ सुपादः सुपादं सुपादौ।

२२३। पादःपत्यौ॥

पादः पत् स्यात्यौ परे। सुपदः सुपदा सुपद्भ्यां इत्यादि। २१२ चङितिकुङ्। ५० नस्य नुः। ५१ नोर्ङः। १६४। स्यान्तस्य लुप्। प्राङ्प्राञ्चौ प्राञ्चः प्राञ्चं प्राञ्चौ एवं क्रुञ्च तिर्य्यञ्चादञ्चादयः।

२२४। अचोल्लोपोर्घस्य।

अचोऽकारस्य लोपः स्यात्यौ परे पूर्व्वस्यच घः। प्रतीचः प्रतीचा प्रत्यग्भ्यां इत्यादि।

२२५ । तिर्य्यगमुमुयगदमुयगुदचां तिरश्चामुमुईचादमुईचोदीचः ॥

एषामेते क्रमात् स्युः घौ परे । तिरश्चः तिरश्चा तिर्य्यग्भ्यां इत्यादि । अमुमुईचः अमुमुईचा अमुमुयग्भ्यां इत्यादि । एवमदमुयङ् । उदीचः उदीचा उदग्भ्यां इत्यादि । शेषं पूर्व्ववत् । १५४ शक्राजति चस्य षत्वे तन्निमित्तस्य शस्य सत्वे २१४ स्रादेःसोलोपः । सुहृट् सुहृड् सुहृशौ सुहृशः इत्यादि । १६५ नसत्महन्नद्गतिर्घः । १६४ स्रान्तस्य लोपः । महान् महान्तौ महान्तः महान्तं महान्तौ महतः महता महद्भ्यां इत्यादि । भवन् भवन्तौ भवन्तः भवन्तं भवन्तौ भवतः भवता भवद्भ्यां इत्यादि । शेषं महद्वत् । १८७ अत्व सोधोरिति । श्रीमान् शेषं भवद्वत् । एवं यशस्वदादयः ।

२२६ । भगवदघवद्भवतांभगोऽघोभोवाधौ ॥

एषामेते क्रमात् स्युर्वा धौ परे । हेभगोः हेभगवन् हेअघोः हे अघवन् हे भोः हे भवन् । शेषं

धीमद्वत् । १८४ अद्वेरित्युक्तेर्न नुम् । ददत् ददतौ ददतः इत्यादि ।

१५४ शच्छ्राजेति षड् । विट् विड् विशौ विशः विशं विशौ विशः विशा विड्भ्यां इत्यादि । १७६ मुहांघङिति । नक् नग् नट् नड् नशौ नशः नशं नशौ नशः नशा नग्भ्यां नड्भ्यां इत्यादि । १८६ श्वेतवाहेति डस्ड् पुरोडाः हेपुरोडाः हे पुरोडः पुरोडाशौ पुरोडाशः पुरोडोभ्यां इत्यादि । २१२ । चुङिति- कुङ स्पृक् स्पृशौ स्पृशः स्पृशा स्पृग्भ्यां इत्यादि दधृक् दधृग् दधृषौ दधृषः दधृग्भ्यां इत्यादि । षट् षड् षड्भिः षड्भ्यः षसां षट्सु ।

२२७ । सषेसुस्सजुषहां रङ फेऽच्चः ॥

सस्य स्थाने जातस्य षस्य इसुसः सजुषोऽङ्कस्य रङ् स्यात् फे परे नतु चान्तस्य ।

२२८ । र्व्यनचत्तयोकोधोर्वोऽकुर्छु- रोऽखेः ॥

धोरिकोर्घः स्याद्वि रेफेच नतु कुर्च्छुरो नच खे- र्नोचि तयेच । पिपठी: पिपठिषौ पिपठिषः पिप

दोर्भ्यां पिपठीःषु । एवंचिकीर्षादयः । दोः दोषौः दोषः दोषं दोषौ । ११४ पाददन्तेति दोषन् वा । दोष्णः दोष्णा दोर्भ्यां दोषभ्यां इत्यादि । २१४स्यादेः सोलोपः । विविट् विविड् विविचौ विविचः विविड्भ्यां इत्यादि । पिपक् पिपग् पिपचौ पिपचः पिपग्भ्यां इत्यादि । एवं गोरग् दिधिचादयः । सुपीः सुपिसौ सुपिसः सुपीर्भ्यां सुपीःषु एवं सुतूः । विद्वान् हे विद्वन् विद्वांसौ विद्वांसः विद्वांसं विद्वांसौ ।

२२९ । वसोर्व्वः सेमप्युर्मतुप्योः ॥

वसोर्वशब्दइमसहितोऽपि उः स्यान्मतौ पौ च परे । विदुषः विदुषा । १८४ स्रस्ध्वस् वस्विति दङ् । विद्वद्भ्यां इत्यादि । पेचिवान् पेचिवांसौ पेचिवांसः पेचिवांसं पेचिवांसौ पेचुषः पेचुषा पेचिवद्भ्यां इत्यादि । जगन्वान् जगन्वांसौ जगन्वांसः जगन्वांसं जगन्वांसौ वस्वोत्वे तन्निमित्तस्य नस्य मत्वे ।

२३० । हनगमजनखनघसामुङ् लोपोऽङेच्यणौ ॥

एषामुङ्लोपः स्याद्गणावचि नतु ङे। जग्मुषः जग्मुषा जगन्वद्भ्यां इत्यादि। एवं जग्मिवान्। १६४ अधोरित्युक्तेः। सुहिन् सुहिंसौ सुहिंसः सुहिन्भ्यां। ध्वत् ध्वसौ ध्वसः ध्वद्भ्यां। एवं स्रत्। उक्थशाः हे उक्थशः उक्थशासौ उक्थशासः उक्थशोभ्यां।



## २३१। पुंसोऽसुङ् घौ॥

पुंसोऽसुङ् स्यात् घौ परे ङावितौ। पुमान् पुमांसौ पुमांसः पुम्भ्यां पुंभ्यां।

## २३२। सेर्डोशनस्पुरुदंशोऽनेहसोऽधेः।

एभ्यः परस्य से डा स्यान्नतु धेः। उशना।

## २३३। धेर्डनौवोशनसः।

उशनसः परस्य वेर्डनौ वा स्तः ङइत्। हे उशन् हे उशनन् हे उशनः उशनसौ उशनोभ्यां। अनेहा हे अनेहः अनेहसौ अनेहसः एवं पुरुदंशा। वेधाः हे वेधः वेधसौ वेधसः इत्यादि। १६४ अधोरित्युक्तेः। सुवः सुवसौ।



## २३४। अदसः सेरौः।

अदसः परस्य सेरौः स्यात् । असौ ।

२३५ । मात् स्वर्णाभुक्त ॥

अदसो मात्परौ स्वर्णौ वुदूतावाप्नुतः अमू ।

२३६ । एरीब्बे ॥

अदसोमात्परोब्बे निष्पन्नएकार ईः स्यात् । अमी अमुं अमू अमून् । १२३ टादसस्त्वाक्लियान्तु ना । अमुना । अमूभ्यां अमीभिः अमुष्मै अमूभ्यां अमीभ्यः अमुष्मात् अमूभ्यां अमीभ्यः अमुष्य अमुयोः अमीषां अमुष्मिन् अमुयोः अमीषु ।

हसन्त पुंलिङ्ग पादः



हसन्त स्त्रीलिङ्ग शब्दः ।

२३७ । नहोधङ्भौ ॥

नहो हस्य धङ्स्यात् भौ परे । उपानत् उपानद् उपानहौ उपानद्भ्यां । २१२ च्वङ्कितिकुङ् उष्णिक् उष्णिहौ उष्णिग्भ्यां इत्यादि ।

२३८ । दिव औङ्सौ ॥

दिवऔङ्स्यात् सौ परे । द्यौः दिवौ दिवः ।

२३९ । वाय्याङ ॥

दिवआङ्स्याद्वामि परे । द्यां दिवं दिवौ दिवः दिवा ।

२४० । उहस्युङ ॥

दिवउङ स्यात् उवर्णौ हसि च परे । द्युभ्या ।
गीः गिरौ गिरः । एवं पूः । १६८ स्त्रियां
त्रिचतुरङ्गतिचतसृ । चतस्रः चतस्रः चत-
सृभिः चतसृभ्यः२ चतसृणां चतसृषु । १३१
टेरत्वे आप् । का के काः इत्यादि सर्व्वावत् ।
एवं यद् । २०१ इदमोऽयमितीयं । इयं इमे
इमाः अनया आभ्यां आभिः अस्यै आभ्यां आभ्यः
अस्याः आभ्यां आभ्यः अस्याः अनयोः आसां
अस्यां अनयोः आसु । स्रक स्रजौ स्रजः
स्रग्भ्यां । १३३ टेरत्वे आप् । स्या त्ये त्याः
इत्यादि सर्व्वावत् । एवं तद् एतद् । वाक्
वाचौ वाचः वाचं वाचा वाग्भ्यां । अपशब्दो
व्वान्तः । १६२ नसवमहन्नोऽघोर्घः आपः
अपः ।

२४१ । भ्यपोदङ ॥

अपोदङ् स्याद्भि परे। अद्भिः अद्भ्यः २ अपां अप्सु। दिक् दिशौ दिशः दिग्भ्यां इत्यादि। एवं दृक्। त्विट् त्विषौ त्विषः त्विषा त्विड्भ्यां इत्यादि। सजूः सजुषौ सजुषः सजुषा सजूर्भ्यां सजूःषु। एवं आशीः। २३५ अदसः सेरौः असौ अमू अमूः अमूं अमूः अमुया अमूभ्यां अमूभिः अमुष्यै अमूभ्यां अमूभ्यः अमूष्याः अमूभ्यां अमूभ्यः अमूष्याः अमुयोः अमूषां अमुष्यां अमुयोः अमूषु।

## इति हसन्त स्त्रीलिङ्गपादः।

---

## हसन्त क्लीवलिङ्ग शब्दः।

१६९ स्यमोर्लुगिति। १८४ स्नस्ध्वस्वतिदङ। अनडुत् अनडुही। १८२ अनडुच्चतुरोऽणाणाविति। अनड्वांहि। पुनस्तद्वत्। शेषं पुम्वत्। चत्वारि ब्रह्म।

### २४२। क्लीबेनोलुब्बाधौ॥

नपुंसके नस्य लुप स्यात् वा धौ परे। हे ब्रह्म हे ब्रह्मन् ब्रह्मणी ब्रह्माणि। अहः अह्नी

अहनी अहानि अहोभ्यां । किं के कानि । इदं इमे इमानि । असृक् असृजी असृ न असृञ्जि असृना असृजा असभ्यां असृग्भ्यां इत्यादि। ऊर्क ऊर्जी ऊनर्जि ऊर्जि। सुवल् सुवनल्‌ग सुवल्‌गि । नुमयमेत्यतझसन्तरलयोरिति नुण् नकारेतोनुर्विन्दुमात्रस्य नाख्या । त्यत् त्येत्यानि एवं यत् तत् एतत् । २२२ अनूक्तौ तु । एनत् । गवाक् गोची गवाञ्चि । तिर्य्यक् तिरश्ची तिर्य्यञ्चि एवं परे। यकृत् यकृती यकानि यकृन्ति यकभ्यां यकृद्भ्यां इत्यादि एवं शकृत् । ददत् ददती ।

२४३ । हेः शतुर्नुण् शौ ॥

हेः परस्य शतुर्नुण् स्यात् शौ परे वा । ददन्ति ददति । एवं यचत् जाग्रदादयः । तुदत् ।

२४४ । आदीपोः ॥

अवर्णात् परस्य शतुर्नुण् स्याद्वा ईकारे ईपि च परे । तुदन्ती तुदती तुदन्ति । भात् भान्ती भाती भान्ति । पचत् ।

२४५ । अपयनोनित्यम् ॥

अपोयनस्त्र शतुर्नित्यं नुम् स्यादौ ईपोः परयोः । पचन्तौ पचन्ति । दीव्यत् दीव्यन्तौ दीव्यन्ति । स्वप् स्वपी । १६२ नसव्महन्तोऽधोर्घः । स्वाम्पि स्वपा । २४२ व्यापोदङ् स्वङ्गिः । २२८ सषेति रङ् धनुः धनुषी धनूंषि । एवं हविः । पयः पयसी पयांसि पयसा पयोभ्यां । अदः अमू अमूनि । द्वौ शौवत् ।

हसन्त नपुंसकलिङ्ग पादः

अव्यय शब्दः ।

२४६ । व्याल्लुक् क्तेः ॥

व्यात् परस्याः क्तेर्लुक् स्यात् । स्वः प्रातः च वा हा है उच्चैः उच्चकैः धिक् धक्कित् प्र परा हरिवत् कृत्वा ।

२४७ । उदः सः स्थास्तम्भोः ॥

उदः परयोरनयोः सस्य लुक स्यात । उत्थानं उत्तम्भः ॥

२४८ । वातोऽवाप्योः ।

अवाप्योरकारस्य लुक् स्याद्वा । वगाहः अवगाहः पिधानं अपिधानम् । इति व्यपादः ।

इति हसन्ताध्यायः ।

२४९ । स्त्रियामत आप् ॥

स्त्रीलिङ्गे स्थितादकारान्तादाप् स्यात् । मेधा सर्वा ।

२५० । हसाद्वा ॥

स्त्रियां हसन्तादाप् स्याद्वा । वाचा वाक् दिशा दिक् ।

२५१ । मनोडाप् ॥

स्त्रियां मनन्ताद्वा डाप् स्यात् । सीमे सीमानौ पामे पामानौ ।

२५२ । हेऽनः ॥

स्त्रियां स्थितादनन्ताद्वा डाप् स्याद्धे । वङ्क्यज्वे वङ्कयज्वानौ ।

२५३ । ईप् चाम्बस्थात् ॥

मस्य वस्थान्यपरादनन्ताद्धे स्थितात् स्त्रियामीप् डाप् च स्याद्वा । वङ्कराज्ञ्यौ वङ्कराजे वङ्कराजानौ ।

२५४ । काप्यनाष्णोरकेऽदिदयत्तत् चिपादेः ॥

आशीरर्थाकवर्जे कापि परे अकार इः स्यात् नतु यत्तत्चिपादेः । सर्व्विका कारिका । आशीरके तु जीवका । यदादेस्तु । यका सका च्चिपका ध्रुवका चटका ।

२५५ । द्वैषसूतपुवृष्टन्दारस्वज्ञाजभस्त्राधुत्यक्योर्व्वा ॥

द्वादेर्धुत्यवर्जयोः कययोस्थाकारइकारः स्याद्वा कापि । द्विके द्वके चटकिका आर्यिका आर्यका धुत्ययोस्तु । नायिका कत्यिका ।

२५६ । वाच्चापोऽनुक्तपुंस्कस्य ॥

आपः स्थाने जातो ऽकार इदाच्च स्याद्वा कापि नतूक्तपुंस्कस्य । गङ्गिका गङ्गाका गङ्गका । उक्तपुंस्कस्य तु । क्षुद्रिका ।

२५७ । ध्वृन्नृच्चाहनदादेरीप् ॥

धकारेतष्टकारेत ङकारेत ऋकारेतोनान्ताहदन्तादञ्चोवाहोनदादेश्च ईप् स्यात् स्त्रियां ।

२५८ । ययोर्लोपोऽयुक्तौ पौ ॥

इवर्णावर्णयोर्लोपः स्यादयावक्तौ पौ परे । वैष्णवी वराकी ।

२५९ । क्यङ्च्वौचानात्यपत्यण्णत्रस्य॥

अपत्यार्थण्णत्रस्य लोपः स्याद्यावक्तौ पौपरे क्यङ्च्वौ च नत्वाकारे । गार्गी ।

२६० । सूर्य्यागस्त्यत्रस्य तिष्यपुष्यस्य ण्णत्रमत्स्यस्येयेपोर्भण्णे ङीपि यः ॥

एषां यस्य लोपः स्यादीयेपोः परयोर्न चत्रण्णे ङीपि च। सौरी आगस्ती चातुरी । ट। त्रयी भूषणी । ञ । विदुषी श्रीमती भवती । २४६ अप्यनोर्नित्यं । ऋ । पचन्ती । २४५ आ-दीपोः । तुदन्ती तुदती भान्ती भाती । न । दण्डिनी अर्वती राज्ञी शुनी मघोनी मघवती। ऋ । कर्त्री क्रोष्ट्री । अञ्च । प्रतीची प्रत्यञ्ची तिरश्ची तिर्य्यञ्ची अमुमुईची अदमुईची उदीची ॥ वाह भारौही श्वेतौही श्वेतवाही प्राल्पूही नदी मत्सी गौरी ।

२६१ । णचवसाद्वनोरङीश्वातु हे॥

णादचः खसाच्च परस्य विहिताद्वन ईप् स्यात् वनो रङ् च स्त्रियां हे तु वा । अवावरी धी-वरी हरिदृश्वरी वकुधावरी वकुधावा ।

२६२। स्त्रोधः संख्यादिदामवयो र्थहायनाद्वे ॥

ऊधसः संख्यापूर्वाद्दाम्नोवयोर्थहायनाच्च ईप् स्यात् द्वे सस्य च नः स्यात्। पीनोघ्नी द्वि-दाम्नी द्विहायनी।

२६३। जातेरतोऽस्त्रीयुङसत्काण्ड प्राक्प्रान्त घतैकादिपुष्पसम्भस्त्राजिनै कघणपिण्डादिफलनादिमूलात् ॥

जातिवाचिनोऽकारान्तात् स्त्रियामीप् स्यात् नतु स्त्रीयुङादेः। मृगी हंसी घीतपार्की। स्त्रीयुङादेस्तु मचिका वैश्या सत्पुष्पा संफला घमला। जातेः किं। मन्दा। आकृतिग्रहणा जातिर्लिङ्गानाञ्च न सर्वभाक्। सकृदाख्यात-निर्ग्राह्या गोत्रञ्च चरणैः सह। गार्गी कठी कौथुमी।

२६४। गुणाद्वोतोऽखरुप्योङः ॥

गुणवाचकादुकारान्तात् स्त्रियामीप्स्याद्वा नतु खरोः प्योङश्च। मृद्वी मृदुः। खरुप्यो-ङन्तु। खरुः पाण्डुः। गुणात् किं। वसु

निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः । धेनुः ।

२६५ । पाच्छोणादिस्वाङ्गेतोऽक्तेर्वा ।

पादः शोणादेः स्वाङ्गादिकारान्ताच्च स्त्रियामीप् स्याद्वा न तु क्तेः । त्रिपदी त्रिपात् शोणी शोणा चण्डी चण्डा बिम्बोष्ठी बिम्बोष्ठा । स्वाङ्गात् किम् । स्वाङ्गं स्यादद्रवं मूर्त्तंप्राणिस्थमविकारजम् । दृष्टं तत्रातत्स्थमपि तद्वत्ताद्दृशि च स्थितम् । वक्रस्वेदा द्रवत्वात् । सुज्ञाना अमूर्त्तत्वात् । सुमुखा शाला अप्राणिस्थितत्वात् । सुशोफा विकारजत्वात् । सुकेशी सुकेशा रथ्या; अप्राणिस्थस्यापिप्राणिनि दृष्टत्वात् । सुस्तनी सुस्तना प्रतिमा, प्राणिवत् प्राणिसदृशे स्थितत्वात् । राजी राजिः । क्तेस्तु । बुद्धिः मतिः ।

२६६ । धात् क्रीतात् ॥

धनेन क्रीयते स्म धनक्रीती ।

२६७ । क्तादल्पे ॥


धादित्येव । अभ्रलिप्ती । अभ्रेण लिप्यते स्म ।

२६८ । स्वाङ्गाङ्गे ॥

स्वाङ्गात्परो हे स्थितो यः क्तस्तस्मादीप स्यात् । शङ्खभिन्नी ।

२६९ । वाच्छन्नाज्जातेः ॥

आच्छादनजातिवर्ज्जाज्जातिवाचिनः पराङ्गे स्थितात् क्तादीप् स्याद्वा । दन्तुभक्षिती दन्तु भक्षिता । छन्नात्तु वस्त्रच्छन्ना ।

२७० । पत्नग्रामपालकान्तात् ।

पुंवाचकाद्पालकान्तादीप् स्याद्भार्य्यायाम् । गोपी । पालकान्तात्तु गोपालिका ।

२७१ । ब्रह्मरुद्रभवसर्व्वमृडेन्द्रवरुणादानङ् च ॥

एभ्यः पत्नग्रामीप् स्यात्तेषामानङ् च । ब्रह्माणी रुद्राणी ।

२७२ । मातुलोपाध्यायक्षत्रियाचार्य्यसूर्य्यार्य्याद्वा ॥

मातुलानी मातुली । अन्ये त्वीपमपि विकल्पयन्ति । तदा मातुलेत्यादि । तद्वाशब्दो व्यवस्थार्थः । आचार्य्यानी इत्यत्र न णत्वं ।

२७३ । वृषाकप्यग्निमनुपूतक्रतुकुसितकुसीदादैङ् च ॥

एभ्यः पतत्रामीप् स्यात्तेषामैङ् च । वृषाकपायी अग्नायी मनायी ॥

२७४ । नारी सखी यवानी यवनानी हिमान्यरण्यानी मनावी पतिवत्न्यन्तर्व्वत्नी पत्नी भाजी गोणी नागी स्थली कुण्डी काली कुशी कामुकी घटी कबरी नील्यधिम्बरः ॥

एते निपात्यन्ते ।

२७५ । पद्धती शक्ती युवत्यनड्वाही श्वेन्येनी हरिणी भरिणी रोहिणी लोहिन्यसिक्नी पलिक्न्योवा ॥

पद्ध पद्धतिः शक्तिः यूनी अनडुही श्वेता एता हरिता भरिता रोहिता लोहिता असिता पलिता इति । असिक्नी अवृद्धा पलिक्नी वृद्धा ।

२७६ । न षट् संख्यास्वस्रादेः ॥

एभ्य ईप् न स्यात्। सीमा पञ्च स्वसा माता प्रजा बाला। १०१ तेपील्युके:। यावती वक्त्री।

२७७। उतोऽयुङ्रज्ज्वादेर्न् प्राणि जातेरूप्॥

स्त्रियामकारान्तान्नृजातेरप्राणिजातेश्च ऊप् स्यात् नतु युङोरज्ज्वादेश्च। कुरूः कर्कन्धूः। प्राणिजातेस्तु। धेनुः। युङ् रज्ज्वादेस्तु अध्वर्युः रज्जुः हनुः।

२७८। वामलक्ष्मणशफसहसहित संहितोपमानादूरोः॥

वामोरूः रम्भोरूः।

२७९। तन्वादेर्वा॥

तनूः तनुः चञ्चूः चञ्चुः।

इति स्त्रीत्यपादः॥

.........

## षट्कारकम्।

२८०। त्यर्थसम्बुद्ध्युक्तार्थेप्रो॥


त्यैरुक्तोऽर्थ ... [illegible]

ष्णः श्रीः स्नानं हे विष्णो । सर्व्वैऽर्च्यः श्री-
वनः पाता दानीयः प्रभवोलयः ।

२८१ । कर्म्मक्रियाविशेषणाभिनि
विशाधिशीङ्स्थासन्वध्युपावसडं ढं ह्री ।

कार्य्यं क्रियाविशेषणमभिनिविशादेर्डञ्च ढसंज्ञं
स्यात् तत्र च ह्री । रामं नमति सानन्दं धर्म्मान
भिनिविश्य सन् । श्रीशोऽधिशेतेऽहिमधिष्ठितो
ऽब्धिमध्यास्य घोषं मथुरामनूष्य । यो द्वारकाम
ध्युषितो विकुण्ठमुपावसच्चावसतात् सहन्नः ।

२८२ । देशाध्वकालभावं वाढैः ॥

अढैर्धुभिर्योगे एते ढसंज्ञा वा स्युः । नदीर्व्व
नेषु चोषित्वा क्रोशान्नर्ह्ष्वहर्निशि । चंक्रमित्वा
प्रियानीतिं रामो रक्षोवधे स्थितः ।

२८३ सदाध्वादिव्याप्तौ सर्व्वैः सिद्धे
तु घम् ॥

सर्व्वैर्धुभिर्योगे ऽत्यन्तसंयोगेऽध्वादयोनित्यं
ढसंज्ञाः स्युः । अर्थसिद्धौ तु घसंज्ञाः । क्रत्यैः
कृष्णोऽन्वितः क्रोशं मासौ गुरुगृहे स्थितः । गुरू
पदेशं [illegible]

२८४ । घोऽऔञेः शब्दाशनगति
ज्ञार्थाढ्यग्रहदृशश्रोरखादनीक्रन्दायश
ब्दायह्वादासूतघवहाहिंसाभक्षोहृक
माभिवादिदृशस्तु वा ॥

अञन्तानां शब्दार्थादीनां योधः स ञन्तानां
ढं स्यात् नतु खादादेः ह्वादेस्तु वा । गेयम
ध्यापयद्गोपान् याज्ञिकान्नमभोजयत् । स्वधा-
मागमयच्छत्रून् भक्तांस्तत्त्वमबोधयत् । धर्म्म-
मस्या पयद्विप्रान्वेदानग्राहयद्विधिं । दैत्यानदर्श-
यच्छक्तिं वेणुमश्रावयच्च गाः । खादादेस्तु । रक्षां
स्यखादयदनाययदूर्द्ध्वलोकमाक्रन्दयत् कपिभि
राययद्दाशु रामः । शब्दाययन्निपुमजूहवदाद
यच्च शैलानवाहयद्भक्षयदिष्टमच्युतम् । सार-
थिघहिंसार्थयोस्तु । वाहानवाहयत् पार्थमरीं
श्चाभक्षयद्धरिः । शैलानहारयत् कीशान्दक्षै
र्घानजीहरत् । कपीनकारयत् सेतुं वानरै
रपि राघवः । स्माभिवादयते वृद्धान् जानकीं
लक्ष्मणेन च । सीतां रामेण चात्मानमदर्शयत
लक्ष्मणः ।

२८५। याच्अर्थदुहचिप्रच्छरुधवृशासजिनीवहः हृदण्डग्रहकृष्मन्थमुष्पचाद्याश्चवोद्विढाः॥

तमर्थयेऽहं मोक्षं यो गोपैर्दुग्धमदुग्ध गाः।
फलान्यवाचिनोवृक्षान् वार्त्ताः पप्रच्छ वल्लवान्।
रुरोध गोकुलं गोपीरब्रवीच्च मनोहरम्।
गोपालानन्वशात्केलीं स्तनाजय्यं जिगाय
तान्। वृन्दावनमनैषीद्गास्तच्छिशूनवहद्व्रजम्।
जहाराराण्यमाभीरीर्दैत्यान्प्राणानदण्डयत्।
जग्राह यज्वनोभोज्यमकर्षत् पूतनां बलम्।
ममन्थाम्बुत मम्भोधिं मुमोष दितिजांश्च तत्।
यो सौ पचति लोकानां पुण्यपापं सुखासुखम्।

२८६। धिक्समयानिकषाहान्तरेणैनाति येनतेनाभ्युभयपरिसर्वतोविनत्तैऽभिपरिप्रत्यनूपद्धुरपर्य्यधोऽधिभिः॥

एभिर्योगे द्वी स्यात्। वीप्सेत्यम्भावचिह्नेऽभिलक्षुभागे परिप्रती। अनुस्तेषु सहार्थे च हीने ऽनूपौ मताविह। धिग्लोकमीश्वराभक्तं समया माधवं रमा। निकषा गिरिशं गौरी

द्वा लोकं केशवद्विषम् । कृष्णोऽन्तरा ब्रह्मशम्भू नान्तरेणाच्युतं सुखम् । दक्षिणेन हरिं रुद्रो गोविन्दमति नेश्वरः । येनेषुं हरिरीशस्तं तेने शममितो ऽर्च्चकाः । रामकृष्णावुभयतोगोपेषु परितः परे । प्रमथाः सर्व्वतः सर्वं शम्भुने शार्व्वनं विना । मुक्तिर्नत्तूऽघ्यतोपास्ति भूतं भूतमभि प्रभुः । भक्तोविभुमभिप्राञ्चो गोविन्द मभितिष्ठति । हरिं पर्य्यभल्लक्ष्मीर्हरं प्रति हलाहलम् । विष्णुमन्वर्च्चयते भर्गः शक्रादयउ पाषतम् । लोकानुपर्य्यं पर्य्यास्ते धोऽधोध्यधि च माधवः ।

## २८७ । दिवोधं वा ।

दिवो धं टं स्याद्वा । अक्षैरक्षान् दीव्यतीशः ।

## २८८ । साधनहेतुविशेषणभेदकं धं कर्त्ता घश्ची ।

नेत्रैः पुण्येन भूषाभिर्नाम्ना दृष्टः शिवोजनैः ।

## २८९ । सहवारणसमोनार्थैर्वि नाहेपृथङ्नानाद्यैः ॥

एभिर्योगे त्री स्यात् । सहेशाव्वर्गौ च्युतोभेदे-

नालं तेन समोऽस्ति कः। विकारैरहितः शम्भुः सतामर्च्यः शिवार्च्चया। स्त्रीत्वेन विना शम्भुः पृथग्विभवेन तत् पुनः। न नाना शम्भुना रामाद्वर्षेणाधोत्तमोऽवरः।

## २६०। कालेभाड्डे वा॥

कालवाचिनो नञ्चलात् त्री ङे वा स्यात्। रोहिण्यामभवत् कृष्णो रोहिण्यासीच्च चण्डिका।

## २६१॥ मानाद्वीप्सायां ढे॥

शतं शतं पयोऽपोष्यत् वत्सान् विष्णुः शतेन गाः। द्विद्रोणेन क्रीणाति पञ्चकेन क्रीणाति द्विद्रोणं पञ्चकम्।

## २६२। संज्ञोऽस्मृतौ॥

स्मरणादन्यस्मिन्नर्थे वर्त्तमानस्य संपूर्वस्य जानातेर्ढे त्री स्याद्वा। संजानीष्व स्वमीशा च संजानीहि ततः शिवं।

## २६३॥ सन्दानोभेऽधर्मे नित्यम्॥

संपूर्वदानसम्बन्धिनि अधर्म्मभे त्री स्यात् नित्यं। संयच्छते स [illegible] शम्भुः संयच्छति श्रियै।

२६४ । यस्मै दित्सासूयाक्रोधेर्ष्याकचिद्द्रोहस्थाह्नुश्लाघस्पृहिधप्राधीक्षाप्रतिशुप्रत्यनुगृधार्य्यर्थाभं ची तादर्थ्ये च ।

यस्मै दातुमिच्छा असूयादयः स्थादेरर्थश्च यस्मै तद्भसंज्ञं स्यात् तत्र ची तादर्थ्ये च । ददातु सद्भ्यः स सुखं हरिः खराज्ञोपोगणोऽसूयति कुप्यतीर्ष्यति । स्मा रोचते द्रुह्यति तिष्ठते ह्नुतेऽश्लाघिष्ट यस्मै स्पृहयत्यधम च । गर्गो राध्यति रामाय कृष्णाय ईक्षते व्रजे । शुभाशुभं पर्य्यालोचयतीत्यर्थः । विभीषणायाशुश्राव राज्यं प्रत्यशृणोद्यशः । प्रतिज्ञातवानित्यर्थः । रामः प्रत्यगृणात्तस्मै लक्ष्मणोऽन्वगृणात् कपिः । रामं वदन्तं प्रोत्साहयामासेत्यर्थः । सर्व्वान्धारयते सर्व्वं सद्भ्यस्तं भज मुक्तये ।

२६५ । शक्तार्थवषड्हितसुखस्वाहास्वधास्वस्ति नमोभिः ॥

एभिर्योगे ची स्यात् । दैत्येभ्योऽलं हरिः प्रभुः वषट् सद्भ्यो हितं सुखम् । स्वाहाग्नये स्वधा



पितृभ्यः स्वस्ति [illegible] नमः [illegible]

२९६। ढेनाभ्रिषि वा॥

सङ्गरः सताम्बा षं भूयात्।

२९७। परिक्रियो षे वा॥

भक्त्यैव मुक्तिः परिक्रीता सद्भिर्विष्णोरुपासिभिः।

२९८। गत्यर्थमन्यढेचेष्टावद्भेऽनध्वाकाकमूक शृगालनावन्ने वा।

गत्यर्थमन्यत्योर्ढे क्रमात् मार्गकाकादिवर्ज्जे चेष्टावद्भयोश्चीस्याद्वा। व्रजाय व्रजति शौरी व्रजं व्रजति केशवः। न त्वा तृणाय मन्येऽहं न त्वा मन्ये तृणं खल। चेष्टावद्भे किम्। मनसा द्वारकामेति त्वां मन्येऽहं जनार्द्दनम्। अध्वादौ तु। गच्छत्यनन्तः पन्थानं न त्वा काकं समन्यते।

२९९। यतोऽपायभीजुगुप्सापराजयप्रमादादानभूत्राणविरामान्तर्द्धिवारणम् जं पो॥

यत एते तज्जसंज्ञं स्यात् तत्र पो। विभीषणः पदाद्भ्रष्टो भ्रातुर्भीतो जुगुप्सितः। पापात्

विद्योमुनेर्जातोभ्रातुस्तातोनिजैर्भवात्। विरतोऽन्तर्हितोदुष्टाच्छोकाद्रामेण वारितः।

३००। अन्यारभ्यार्थारादृहिर्विनर्त्तेप्रतिपर्यपाङ्दिक्शब्दैर्हेतु यवर्थे च॥

एभिर्योगे हेतौ यवन्तस्यार्थे च पी स्यात्। आङ्व्याप्तिसीम्नोस्त्यागेऽन्यौ प्रतिदाननिधौ प्रति। नेतरो विष्णुरीशानाङ्गवात्प्रभृति सोऽर्च्यते। सोऽस्मदारादृहिस्त्वच्छ विना नार्थोदृष्यते। भक्तेः प्रत्यक्षतं शम्भोः प्रद्युम्नः केशवात् प्रति। पर्य्यनन्तात् तयस्तापा आमुत्तयोः सेव्यतां हरिः। ब्रह्मास्त्रापसकलात् पूर्व्वः कृष्णाद्रामोऽवरो गदः। आनन्दादीश्वरः शैलादासनादीच्यतेऽलकाम्। शैलमारुह्य आसने उपविश्येत्यर्थः।

३०१। वारादर्थैः॥

दूरान्तिकार्थैः पी स्याद्वा। रामाद्दूरस्य योदूरं पापात् दुःखस्य सोऽन्तिकम्।

३०२। समाद्यैर्नार्यस्तस्त्वाद्वितसुखैर्निर्द्धारे सम्बन्धे ढ च पी॥

एभिर्योगे एषु च षी स्यात्। यः सर्व्वस्य यमोयस्य दक्षिणेनोत्तरास्थितः। उपर्य्यधः पूर्वतस्य पश्चाद्यस्याखिलं हितम्। सुखञ्च तस्य देवानां वर्य्यस्य पदयोर्भजे।

३०३। ज्ञोऽज्ञाने घे॥

शम्भोर्मुकुन्दे जानीते भक्त्या जानाति शङ्करम्। शम्भुना साधनेन मुकुन्दे प्रवर्त्तते इति। प्रवृत्त्यर्थस्य जानातिः।

३०४। दृप्तरथानाब्बा॥

श्रृङ्गारस्य हरिस्तृप्तः पूर्णः शान्तेन शङ्करः।

३०५। दघेकृत्यव्यक्तुकक्तवतुखलर्थकोच्छतान वसुशीलार्थतृणभव्यणार्थिणि॥

व्यादिवर्ज्जे कृति प्रयुज्यमाने ढ़े घे च षी स्यात्। जगतां कारकः कृष्णः कृतिर्मुररिपोरियम्। व्यादौ तु। स्रष्टा दधिं प्रारकमेतदर्ज्जकानुनीतवन्तं यतिभिः सुदर्शनम्। ज्ञातं हरिं जिष्णुरघानि संस्तुवन् मुदं दधानोऽथितमोघि-

वान्न कः । धन्दाता हत् कदागामी दायो
मोचमर्णां शिवः ।

३०६ । कामुकसड्डार्थक्तेन ॥

कामुकशब्देन वर्त्तमानडयोर्विहितक्तेन च
योगे ढे घे च षी स्यात् । यो लच्म्याः कामुको
ज्ञातः सतां तस्येदमासितम् ।

३०७ । ल्यभावक्तात्त्वगणकसढ़े घे वा ॥
ल्ये भावार्थक्ते स्त्रीविहितं णकञ्च हित्वा अ-
न्यत्र सढे घे च षी स्याद्वा । त्वया मम च कृ-
ष्णोऽर्च्चः स्नातं त्वत्र स यस्य तु । सृष्टेः कृति-
र्हतिर्येन चिकीर्षा यस्य भेदिका ।

३०८ । स्वामीश्वराधिपतिदायाद
साक्षिप्रतिभू प्रसूतकुशलायुक्तनिपु
णसाधुसुजधैर्नादरे ष्णो च ॥

स्वामी मुकुन्दः सर्वेषां साक्षी सर्वेष्वधोक्षजः ।
निश्शङ्कस्त्विरगुर्गोप्यो ऽपत्ये मातुरुदत्यजम् ।

३०९ । कालभावाधारं डं ष्णी ।

एते डसंज्ञाः स्युस्तत्र ष्णी। सामीप्यास्त्रे षविषयै-
र्व्याप्त्याधारश्चतुर्विधः । हेमे शरदि गोविन्दो-

गोपीभिरुदिते विधौ। कालिन्द्यां कानने केलौ कुशलः सकले स्थितः।

३१०। अधिकेशार्थाभ्यामुपाधिभ्याम्॥

अधिकार्थेनोपेन स्वाम्यर्थेनाधिना च योगे प्री स्यात्। गुणाद्युप परार्द्धे स्युर्विष्णोरधि हरौ सुराः।

३११। ढेनार्थात्॥

ढेन योगे निमित्तात् प्री स्यात्। वत्सेषु रजकमवधीत् कृष्णः।

३१२। क्तेनाढे॥

क्तादिद्विष्ठितेनेना योगे ढे प्री स्यात्। वेदेऽधीती।

३१३। निर्द्धारेऽधिकेन क्रियान्तःकालाध्वनोः पी च॥

श्रेष्ठं कृपालुष्वर्कादे रुद्रे कादशकेऽधिकम्। मूर्त्यष्टकाच्छिवं ध्यायन् भुञ्जीयाद्‌द्व्यह्नि वा त्र्यहात्। भूस्थो योजनलक्षेऽर्कं पश्यॅंल्लक्षद्वयाद्विधुम्।

३१४। सीमान्तर्मार्गात् प्री चान्ते॥

सोमनाथाच्छतं क्रोशाः कृष्णः क्रोशेषु चायुते
गङ्गायमुनयोर्मध्ये कति क्रोशाश्च जाह्नवी ।

३१५ । च्यादयोऽर्थार्थैकक्तेः स्वेस्तु सर्व्वाः ॥

अर्थार्थैनैकक्तेर्लृत्यादयः स्युः श्वेस्तु सर्वाः ।
भुक्त्यार्थैनार्थस्य मुक्तेः किं कार्य्यं नार्च्यऽते च्युतः ।

३१६ । संज्ञाः कम् ॥

ढधघभजडाः कसंज्ञाः स्युः ।

इति कारकपादः ।



अथ समासः ।

४१७ । दैक्यं सोऽन्वये ॥

द्वयोर्बहूनाम्बा दानामैक्यं ससंज्ञं स्यात् ।
तच्चान्वये सति कार्य्यं । यथा वन्द्यौ चरणौ कृष्ण
स्येत्यर्थे कृष्णचरणौ वन्द्याविति स्यात् । नतु
कृष्णवन्द्यौ चरणाविति ।

३१८ । भिन्नान्यैकार्थद्व्यादिसंख्या
व्यादीनां चहयषगवाः ॥

भिन्नार्थानां दानां चससंज्ञोऽन्यार्थानां दानां

हसंज्ञ एकार्थानां दानां यसंज्ञोह्यादित्यन्तपूर्वदानां षसंज्ञः संख्यापूर्वदानां परंज्ञोव्ययपूर्वदानां वसंज्ञः स्यात् ।

३१९ । ङोर्लुक् त्ये च ।

से स्थिताया: ङोर्लुक् स्यात् त्ये च परे ।



द्वन्द्वसमासः ।

इतरेतरयोगे च समाहारे च चोद्विधा । हरिश्च हरश्च तौ हरिहरौ । ब्रह्माच अच्युतश्च ईशश्च ते ब्रह्माच्युतेशाः ।

३२० । पुम्वत् स्त्रेः ॥

से स्थितस्य स्त्रेः पुम्वत् स्यात् त्ये च । पूर्व्वपक्षिणे ।

३२१। ऋतोङातत्पुत्रे सगोत्रविद्ये चे ॥

चे स्थितस्य ऋदन्तस्य ङा स्यादृदन्ते पुत्रे च परे सगोत्रविद्ये । मातापितरौ पितापुत्रौ होतापोतारौ ।

३२२ । चगैक्यवं क्लीवम् ॥

चस्यैक्यं गस्यैक्यं वस्य क्लीवं स्यात् ।

३२३ । चैक्याच्चुद्षहोऽः ॥

चवर्गान्ताद्दषहान्ताच्चैक्याद‍ः स्यात् । वाक् च त्वक् च द्वयोः समाहारः वाक्त्वचं श्रीस्रजं शमीदृषदं वाक्त्विषं पीठच्छत्रोपानहं ॥ ऊर्व-ष्ठीवं पदष्ठीवं धेन्वनडुहौ अहोरात्रः स्त्रीपुंसौ वाङ्मनसे ऋक्सामे । दारगवाचिन्नुवादयः साध्याः निपातनादिति ।

इति चः ।

---

## बहुव्रीहि समासः ।

पीतमम्बरं यस्यासौ पीताम्बरोहरिः । नील-मुज्ज्वलं वपुर्य्यस्यासौ नीलोज्ज्वलवपुः कृष्णः । ३२ षुर्णोऽदान्तेति । हरिभाविणी हरिभा-विनी श्रीभावेण श्रीभावेन । रम्यविणा श्रीका-मेण रम्यपक्केन रम्ययुना रम्याङ्गा ।

२२४ । नञोऽनौकाज्‌ञसो ॥

नञोऽचि परेऽन् हसे च अः स्यात् से वा।
नास्त्यन्तो यस्यासौ अनन्तः नान्तः अच्युतः
नच्युतः ।

३२५। महत्तैकार्थेजातीयद्यासकर
विशिष्टेतु ती च ॥

महतस्तआ स्यात् एकार्थे जातीयादौ तु ती च
महाबलः ।

३२६। पुम्वत्स्युरक्तपुंस्काःस्त्रियां ङ्य
मानितत्वथसन्ततरादौ चारूप्ये ॥

उक्तपुंस्काः स्त्रीलिङ्गः पुम्वत् स्यात् एकार्थे
स्त्रीलिङ्गे ङ्यादौ च नतु रूप्ये ।

३२७। नोमाककोङ्पूरण्याख्याऽयु
क्तविकारार्थाणन्तं जातिस्वाङ्गम्मा
निनि ॥

ऊवन्तं तस्याकस्य वा केन ककारोङ् पूरणी-
त्यान्तं संज्ञाभूतमिमुक्तार्थविकारार्थवर्जणि-
तान्तञ्च पुम्वन्न स्यात् । जातिस्वाङ्गविहितेव-
न्तन्तु मानिन्वर्जम् ।


३२८। पूरणीप्रियादिनोऽस्तम

गादुर्भगात्चान्ताकान्तावामनावामाचप
लावालासमा सचिवा तनयादुहितृ
स्वाकल्पाणीभक्तौ ॥

एषु परेषु पुम्बन्न स्यात् ।

३२९ । गवावादेः स्वोऽन्ते गौण्येऽनी
यसः ॥

अन्ते स्थितस्य गोरापईपऊपस्य स्वः स्यात्
अप्रधानत्वे सति नत्वीयसः । प्रीतगुः अवल-
मायः कालतनुः । ईयसस्तु बहुप्रेयसी । ऊवा-
देस्तु । वामोरूभार्य्यः रसिकाभार्य्यः पाचिकाभार्य्यः
षष्ठीजायः दत्ताजायः मैथिली भार्य्यः ब्रह्मणी-
भार्य्यः सुकेशीभार्य्यः । अमानिनि किम् । ब्रा-
ह्मणमानिनी । युमादेस्तु । वैयाकरणभार्य्यः
सौवश्वभार्य्यः काषायकन्यः हैमसुद्रिकः । पु-
रण्यादौ तु ।

३३० । हे पूरणीप्रमाणीभ्यामः ॥

आभ्यामः स्याद्धे । २५८ ययोर्लपोऽयुक्तौ पौ ।
कल्याणीपञ्चमा रात्रयः कल्याणोप्रियः ।

३३१ । दॄतः कः ॥

दीसंज्ञकादृदन्ताच्च कः स्याद्वे । कल्याणपञ्च-
मीकः पक्षः । रातिः पूरणी वाच्या चेति
पूर्वत्र मुख्यत्वम् । स्त्रीप्रमाणः ।

३३२ । सहः सोवा ॥

सहस्य हे सः स्याद्वा । सह मात्रा वर्त्तते
योऽसौ समातृकः सहमातृकः ।

३३३ । सक्थ्यक्ष्णः षः स्वाङ्गे ॥

आभ्यां हे षः स्यात् स्वाङ्गे । दीर्घसक्थः पु-
ण्डरीकवदक्षिणी यस्यासौ पुण्डरीकाक्षः ।
स्वाङ्गे तु । दीर्घसक्थि शकटम् ।

३३४ । दारुण्यङ्गुलेः ॥

पञ्चाङ्गुलं दारु ।

३३५ । द्वित्रेर्मूर्ध्नः ॥

३३६ । न्वोर्लोपौतौ तेऽच्ये ॥

नस्य लोपः स्यादुवर्णस्य श्चोत् स्यादचि ये च
ते । द्विमूर्द्धः ।

३३७ । संख्यायाडोऽवहोः ॥

बहुवर्जायाः संख्यायाडः स्याद्वे । पञ्च षट्

परिमाणं येषां ते पञ्चषाः । उपगता दश येषां ते उपदशाः । बह्वोस्तु । उपबह्वः ।

३३८ । नाभेर्नाम्नि ॥

पद्मनाभः ।

३३९ । लोम्नोऽन्तर्वहिर्भ्याम् ॥

अन्तर्लोमः वहिर्लोमः ।

३४० । नञ्दुःसो सक्थ्नोवा ॥

असक्थः असक्थिः ।

३४१ । अस् प्रजायाः ।

अप्रजाः सुप्रजाः ।

३४२ । मन्दाल्पाञ्च तु मेधायाः ॥

अमेधाः सुमेधाः मन्दमेधाः ।

३४३ । धर्म्मादन् ॥

सुधर्म्मा ।

३४४ । नञ्सुत्रिव्युपाच्चतुरोऽः ॥

एभ्यश्चतुरोऽः स्याद्बे । अचतुरः सुचतुरः ।

३४५ । भान्नेतुः ॥

नक्षत्रान्नेतृशब्दादः स्याद्बे । मृगनेता रात्रिः ।

**३४६। संख्यासूपमानात् पात् पादोऽहस्त्यादेः॥**

एभ्यः पादस्य पात् स्यात् हे नतु हस्त्यादेः। द्विपात् सुपात् व्याघ्रपात्। हस्त्यादेस्तु। हस्तिपादः।

**३४७। कुम्भादेरीपि॥**

कुम्भादेः परस्य पादस्य पात् स्यात् हे ईपि परे। २१२ पात् पत्पौ। कुम्भपदी शतपदी। ईपिकिं कुम्भपादः।

**३४८। व्यतीहारे ञिचः पूर्व्वीघोऽनच्चा वा॥**

व्यतीहारे योहस्तस्माञ्चिः स्यात् पूर्व्वस्य च घः स्यादा वा नत्वचि। केशेषु केशेषु गृहीत्वा यद्युद्धं प्रवृत्तं केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्य यद्युद्धं प्रवृत्तं दण्डादण्डि मुष्टामुष्टि मुष्टीमुष्टि वाहावाहवि वाहूवाहवि। अचि तु अस्यसि।

इति हः।

## कर्म्मधारय समासः ।

परमश्चासावाला चेति परमाला । संश्चासौ चिच्चासावानन्दश्चेति सच्चिदानन्दः ।

**३४९ । कोङादिःपुम्बत् यजातीयदे श्रीये तत्वेत्वजात्याख्यः**

कोङ् पूरण्यादिः पुम्बत् स्यात् यादौ तत्व-योस्तु जाति संज्ञावर्जम् । पाचकस्त्री पञ्चम-भार्य्या ।

**३५० । द्वित्र्यष्टाधिकाद्वात्रयोऽष्टास्त्रि द्दशाद्येऽन्त्यप्रषट्केत्वनशीतौ वा ॥**

एषामेते क्रमात् स्युर्दशादित्रिके चत्वारिं शदादिषट्केऽशीतिवर्जे तु वा । द्व्यधिकादश द्वादश त्रयोदश अष्टादश द्वाचत्वारिंशत् द्विचत्वारिंशत् । अनशीताविति किम् ! द्व्य-शीतिः ।

**३५१।वैकोनस्यैकाद्नैकान्नौसंख्यायाम्॥**

एकादूनविंशतिः एकान्नविंशतिः एकोनविं-शतिः ।

**३५२ । सव्यहोरात्रः षः षगे च ॥**

एभ्यः षः स्यात् ये षे गे च । प्रियसखः पर-
माहः महाराजः ।

३५३ । सर्व्वैकदेशसंख्यातसंख्याव्या-
न्नैकान्नै क्येऽह्नोऽह्नः ॥

एभ्यः परस्य अहन् इत्यस्य स्थानेऽह्नः स्यात्
यादौ नत्वेकान्न च ऐक्ये ।

३५४ । प्राग्वन्नोणोऽतोऽह्नस्य ॥

सर्व्वाह्णः पूर्व्वाह्णः । एकाह्नु । एकाहः अत
इति किम् । त्रिभिरह्नोभिर्जातः त्र्यह्नः ।

३५५ । कौटग्रामात्तक्ष्णः ॥

कौटतक्षः ।

३५६ । जातमहद्वृद्धादुक्ष्णः ॥

जातोक्षः महोक्षः ।

३५७ । शुनोऽत्यप्राण्युपमानात् ॥

अतेः प्राणिवर्जादुपमानाच्च शुनः षः स्यात्
यादौ । आकर्ष इव श्वा आकर्षश्वः । प्राणि-
नस्तु । व्याघ्र इव श्वाव्याघ्रश्वा ।

३५८ । पूर्व्वोत्तरमृगाच्चानतेः
सक्थ्नः ॥

एभ्यः पूर्व्वोक्ताच्चातिवर्जात्सक्थ्नः षः स्यात् यादौ । पूर्व्वसक्थम् ।

**३५९ । देशाद्ब्रह्मणः कुमह द्व्यान्तु वा ॥**

कुत्सितो ब्रह्मा कुब्रह्मः कुब्रह्मा ।

**३६० । सरोनोयोऽश्मनः मंज्ञा जात्योः ॥**

महानसं उपानसं लोहितायसं पिण्डाश्मः अमृताश्मः ।

**३६१ । सर्व्वैकदेशसंख्यातपुण्यवर्षा दीर्घाद्रात्रेः ॥**

रात्रेरेकैकदेशे वर्त्तमानः पूर्व्वादिरेकदेशः । पूर्व्वरात्रः अपररात्रः ।

**३६२ । गोरतार्थे ॥**

गोशब्दात् षः स्यात् यादौ नतु तार्थे । परमगवः ।

**३६३ । नावोऽर्द्धाद्गे च ॥**

अर्द्धात् परान्नौशब्दात् षः स्यादतार्थे गे च । अर्द्धनावम् ।

३६४ । खार्य्या वा ॥

अर्द्धखारं अर्द्धखारी ।

इति यः ।



## तत्पुरुष समासः ।

कृष्णमाश्रितः कृष्णाश्रितः ।

३६५ । व्यं पूर्व्वं ॥

परं व्यं पूर्व्वं स्यात् से सति । राजानमतिक्रान्ता अति राजी अतिखी अत्यङ्गः अतिस्त्रिः ।

३६६ । संख्याव्याद्रात्रङ्गुलिभ्यामः॥

संख्यायाव्याच्च पराभ्यां रात्रङ्गुलिभ्यामः स्यात् यादौ नतु तार्थे । अतिरात्रः अत्यङ्गुलः । हरिणा त्रातो हरित्रातः विष्णवे दत्तं विष्णुदत्तं अच्युताज्जातं अच्युतजातं कृष्णस्य सखा कृष्णसखः महाघासः ग्रामतक्षः मृगसक्थं जालसरसं मण्डूकसरसं राजगवः वर्षारात्रः ।

३६७ । मुख्यार्योरसः ॥

मुख्यार्थादुरः शब्दादः स्यात् यादौ । अश्वोरसं

मुख्योऽम्ब इत्यर्थः । पुरुषेषु उत्तमः पुरुषोत्तमः
अवन्तिषु ब्रह्मा अवन्तिब्रह्मः ।

इति षः ।

---

## द्विगु समासः ।

तस्यार्थे विषये वाच्ये अपत्यार्थष्णिकादिकम् ।
प्रोज्झ्य राजादेः समाहारे गस्त्रिधोत्तरदे परे ।
पञ्चभिर्गोभिः क्रीतः पञ्चगुः ।

३६८ । गैक्यादतोऽपात्रादेरीप् ॥

गैक्यादकारान्तादीप् स्यात् नतु पात्रादेः ।
त्रयाणां लोकानां समाहारः त्रिलोकी । पा-
त्रादेस्तु । द्विपात्रं त्रिपात्रं त्रिभुवनम् चतुर्युगं ।

३६९ । वानापः ॥

अनन्तादापश्चईप् स्याद्वा । पञ्चकर्मी पञ्चकर्म्म
त्रिखट्वी त्रिखट्वम् ।

३७० । तार्थेमानात्काण्डात्क्षेत्रे ॥

त्र्याढकी त्रिकाण्डी रज्जुः । क्षेत्रे तु । त्रि-
काण्डाभूमिः ।

३७१ । पुरुषाद्वा ॥

द्विपुरुषो द्विपुरुषा त्रिसखं त्रिगवं त्रिनावं त्रि-खारं त्रिखारि वरहः ।

३७२ । द्वित्रेर्वाञ्जलेरः ॥

द्व्यञ्जलं द्वयञ्जलि द्वयङ्गुलं त्रिरात्रम् । पञ्च गावो धनं यस्यासौ पञ्चगवधनः द्विनावधनः द्विखारधनः द्वङ्कप्रियः ।

इति गः ।

---

## अव्ययीभाव समासः ।

वः कसामीप्यसाद्दृश्यसाकल्यानुक्रमर्द्धिषु ।
वीप्सापर्य्यन्तयोग्यत्वपश्चादर्थानतिक्रमे । शब्द-प्रादुर्भावाभावयौगपद्येष्वनेकधा ।

३७३ । वात् क्लेर्म्भोऽतोऽप्याः ॥

अकारान्तात् वात् परस्याः क्लेर्म्भः स्यात् नतु प्याः । कृष्णमधिकृत्य प्रवृत्ता कथा अधिकृ-ष्णम् । अप्याः किम् । कृष्णस्य समीपादुतः उपकृष्णाद्गतः ।

३७४ । वोपग्रोर्व्वा ॥

उपकृष्णं उपकृष्णेन कार्य्यं उपकृष्णं उपकृष्णो स्थितः ।

३७५ । लुक् परात् ॥

अकारान्तादन्यस्मात् वात् परस्याः क्तेर्लुक् स्यात् ।

३७६ । सहः सोऽकाले ॥

सहस्य सः स्यात् न तु काले । हरेः सदृशं सहरि । काले तु । सहपूर्व्वाह्णं । टणेन सह सकलमत्ति सटणं ज्येष्ठत्वक्रमस्य अनुज्येष्ठं म-द्राणां समृद्धिः सुमद्रं विष्णुं विष्णुं प्रति प्रति विष्णु अग्निग्रन्थपर्य्यन्तमधीते साग्नि रूपस्य योग्यं अनुरूपं शिवस्य पश्चात् अनुशिवं शक्ति-मनतिक्रम्य यथाशक्ति हरेः शब्दः प्रादुर्भूतः इतिहरि ॥ पापस्याभावः अपापं चक्रेण युगप-द्धेहि सचक्रं यावन्तः श्लोकास्तावन्तोऽच्युतप्र-णामाः यावत्श्लोकम् ।

३७७ । शरद्विपाडयश्चेतोमनोविह्रु-पानद्गिमवद्दिद्दिवनडहृकचतुर्यत्तदोऽः॥

एभ्योऽः स्याद्वे । उपशरदम् ।

३७८ । जराया जरस् च ॥

उपजरसम् ।

३७९ । सरजसोपशुने ॥

निपात्यै ।

३८० । सम्भरःप्रत्यनुभ्योऽच्णः ॥

समक्षम् ।

३८१ । अनः ॥

अनन्ताद्वः स्याद्वे । अध्यात्मम् ।

३८२ । क्लीवाद्वा ॥

उपचर्म्मं उपचर्म्म ।

३८३ । झपनदीपौर्णमास्याग्रहायणीगिरेर्वा ॥

उपसमिधं उपसमित् उपनदं उपनदि ।

इति वः ।



षट्समासः ।

३८४ । पथ्यप्पुरः से ॥

एभ्योऽः स्यात् से सति । सखिपथौ दमग्रप-

योदेशः महापथः दक्षिणापथः चतुष्पथं उपपथं विमलापं सरः विष्णुपुरम् ।

३८५ । द्यन्तर्गेभ्योऽपोऽनात् ॥

एभ्योऽनवर्णान्तेभ्योऽपोऽकार ईः स्यात् । द्वीपं अन्तरीपं समीपम् । अनात्किं प्रापम् ।

३८६ । समापानूपौ ॥

निपात्यौ । समापो देवयजनं अनूपो देशः ।

३८७ । समतुम् मनःकामेऽवश्यं ल्येऽन्त्यलोपं सम् मांसौ तु हिततते पाकपचने वा ॥

समतुम् च मनःकामयोरवश्यं ल्येऽन्त्यलोपं याति सम् हिततयोर्मांसःपाकपचनयोर्वा । समनाः सकामः रन्तुमनाः रन्तुकामः अवश्यरुव्यः सहितः संहितः सततः सन्ततः मांसाकः मांसपाकः मांसचनं मांसपचनम् ।

३८८ । धुरोऽनक्षस्याः ॥

राजधुरा । अक्षस्य तु । अक्षधूः ।

३८९ । ऋचः ॥

ऋचः परोऽः स्यात् से अर्द्धर्चम् ।

३६० । नञवहोर्माणवकचरणे ॥

अन्टचोमाणवकः वह्वृचश्चरणः अन्यत अन्टक् साम वह्वृक् सूक्तम् ।

३६१ । प्रत्यन्ववात् सामलोमनः ॥

प्रतिसामं प्रतिलोमम् ।

३६२ । अक्ष्णोऽचक्षुषि ॥

गवामक्षीव गवाक्षः । चक्षुषि तु विप्राक्षि ।

३६३। ब्रह्महस्तिराजपल्याद्वर्चसः ॥

ब्रह्मवर्चसं राजवर्चसं पल्यवर्चसम् ।

३६४ । समवान्धात्तमसः ॥

सन्तमसम् ।

३६५ । श्वोवसीयसश्च: श्रेयसनिःश्रेयसम ॥

एते निपात्याः

३६६ । तप्तान्ववाद्रहसः ॥

तप्तरहसम् ।

३६७ । प्रत्युरसानुगते ॥

एते निपात्ये ।

३९८ । गेरध्वनः ॥

प्राध्वो रथः ।

३९९ पाण्डूदक्कृष्टाद्भूमेः ॥

पाण्डुभूमो देशः ।

४०० ॥ संख्यायानदीगोदावरी-
भ्याञ्च ॥

पञ्चनदं सप्तगोदावरं द्विभूमः प्रासादः ।

४०१ । निसः शतोडः ॥

निस्त्रिंशः निस्त्वारिंशः ।

५०२ । सूत्सुरभिपूतेर्गन्धादिर्ध्वात्
प्रमानात् ॥

सुगन्धिः पद्मगन्धिः पद्मगन्धः ।

४०३। नार्च्चायां स्वतेः संख्यादेरः ॥

स्वतिभ्यां परात् सख्यादेरोन स्यात् पूजा-
याम् । शोभनो राजा सुराजा अतिशयेन
राजा अतिराजा । अर्च्चायां किं गामतिक्रान्तः
अतिगवः ।

४०४ । किमः चेपे ॥

किं राजा ।

४०५। नञोऽह्वे॥

नञः परात् सख्यादेरो न स्यात् नतु ह्व-
योः। असखा। ह्वे तु। अनपं सरः अ-
सुरम्।

४०६। पथोवा॥

अपथं अपन्थाः। ह्वने तु। अपथो देशः।
अपथम्।

४०७। कत् क्वचित्रिरथवदे॥

कोः स्थाने कत् स्यात् से अनादौ परे। कदन्नं
कत्त्रयः।

४०८। काऽक्षे॥

काक्षम्।

४०९। पथिपुरुषे वा॥

कापथः कुपथः कापुरुषः कुपुरुषः।

४१०। कोरीषदर्थे॥

ईषज्जलं काजलम्।

४११। कत् कवौचाग्न्युष्णे॥

कदग्निः कवाग्निः काग्निः कदुष्णं कवोष्णं
कोष्णम्।

४१२ । ज्योतिर्जनपदरात्रिनाभिबन्धुगन्धपिण्ड लोहितकुक्षिवेणोब्रह्मचारितीर्थपत्नीपक्षे समानः सः ॥

समानं ज्योतिर्यस्यासौ सज्योतिः ।

४१३ । रूपनामगोत्रस्थानवर्णवयोवचनधर्मजातीयोदर्य्ये वा ॥

सरूपः समानरूपः ।

इति स पादः ।

---

तद्धितः ।

४१४ । बाह्वाद्यतोऽज्यावादेर्गर्गादेर्नड़ादेः पितृष्वस्रादेरेवत्यादेः शेषधिवादेःञिण्यणेयण्यायनणीयञ्णिक्ष्णा अपत्ये ॥

एभ्यः परा एते क्रमात् स्युरपत्यार्थे ।

४१५ । णित्ते ञिराद्यचः सुभगसुपज्वालाद्योस्तु द्वन्त्तपदानाम् ॥

अचां मध्ये आद्यचो ञिः स्यात् णिति ते परे

सुभगादेस्तु द्वयोर्द्वयोः सुपञ्चालादेस्त्वन्त्यस्य हस्य । ३३६ ञ्चोर्ल्कौ पौतौते ऽच्ये । वाहोरपत्यं वाहविः उपविन्दोरपत्यं औपविन्दविः उडुलोम्नोऽपत्यं औडुलोमिः अग्निशर्म्मणोऽपत्यं आग्निशर्म्मिः कृष्णस्यापत्यं कार्ष्णिः ।

४१६ । य्वोर्युम्दान्तेऽस्वङ्गव्यङ्गव्यड व्यवहारव्यायामस्वागतस्वध्वरणनः ॥

आद्यचः स्थाने जातयोर्दान्ते स्थितयोर्यवयोः स्थाने क्रमादियुमौ स्तोणिति ते परे नतु स्वङ्गादेः ।

४१७ । द्वारस्वरस्वःस्वस्तिस्वादुमृदु व्यल्कसम्वःश्वन्स्फाकृतस्वस्वाध्यायस्व ग्रामैकन्यग्रोधानां श्वापदन्यङ्कोस्तु वा नत्विति श्वादेः ॥

द्वारादेरद्वितीयस्य न्यग्रोधस्य च य्वोर्युम् स्यात् श्वापदन्यङ्कोस्तु वा नतु श्वादेरिकारादौ ते । धैयश्विः सौवश्विः । स्वङ्गादेस्तु । स्वाङ्गिः व्याङ्गिः व्याडिः ।

४१८ । व्यासादेर्ङक् ष्णौ ॥

वैयासकिः सौधातकिः आत्रेयः शौभ्रेयः गाङ्गेयः मा हेयः यौवतेयः ।

४१९ । कल्याणीसुभगादुर्भगावन्धकीरजकीवलीवद्धीज्येष्टाकनिष्ठामध्यमापरस्त्र्यनुसृष्ट्यनुदृष्टिकुलटाभ्य इनेयः ॥

सौभागिनेयः दौर्भागिनेयः ।

४२० । ओर्लोपोऽकद्रुपाण्ड्वोरेये ॥

उवर्णस्य एये परे लोपः स्यात् नत्वनयोः । कामण्डलेयः । तयोस्तु काद्रवेयः पाण्डवेयः ।

४२१ । क्षुद्रागोधाभ्योवैरारौ ॥

नाटेरः नाटारः नाटेयः गौधेरः गौधारः गौधेयः गार्ग्यः वात्स्यः जामदग्न्यः पाराशर्य्यः ।

४२२ । ओदौतोऽज्वत्तद्धिते यक्यङ्गाः ॥

ओदौद्भ्यां परस्तद्धितः तत्संज्ञकश्च यः क्यङ्गौच अज्वत् स्यात् । बाभ्रव्यः नाडायनः

गार्ग्यायणः दाक्षायणी पैतृष्वस्रीयः रैवतिकः आश्वपालिकः यादवः आङ्गिरसः ।

४२३ । मन्वर्ज्जानुवर्म्मोक्षस्येनोऽनोऽध्वात्म नोऽपत्यष्णोऽविकारष्णोऽभावकर्म्मयङ्ने नन्लोपः ॥

मन्वर्ज्जस्यानोवर्म्मण उक्षणः स्यात् परस्येनश्चापत्यार्थेष्णे अनोविकारार्थवर्ज्जेष्णे भावकर्म्मार्थवर्ज्जे ये च अध्वात्मनोरीने नलोपो नस्यात् ।
याज्वनः भाद्रवर्म्मणः औक्षणः चाक्रिणः पौषः वाग्मिष्ठः ।

४२४ । संख्यासंभद्रान्मातुर्डुर्ष्णे ॥

द्वैमातुरः ।

४२५ । नन् पुंस्त्रियोः ॥

पौंस्नः स्त्रैणः ।

४२६ । कुञ्जादेर्णायन्योऽस्त्रीत्वेऽपत्ये ॥

कुञ्जादेरपत्यार्थे णायन्यः स्यान्न तु स्त्रियां न च त्वे । कौञ्जायन्यः ब्राध्नायन्यः । स्त्रीत्वे तु । कौञ्जायनी कौञ्जायनाः ।

४२७ । गर्गयस्कविदादिम्यरवि

कुत्साङ्गिरोवशिष्ठगोतमरूढ़ाल्लुक् व्रे ऽस्त्रियाम् ॥

देशतुल्याख्यः क्षत्रियो रूढ़ः । एभ्यः परेषामुक्तानां त्यानां व्रे विहितानां लुक् स्यात् नतु स्त्रियाम् । गर्गाः वत्साः यस्काः लब्जाः विदाः ऊर्व्वाः भृगवः अत्रयः कुत्साः अङ्गिरसः वशिष्ठाः गोतमाः अङ्गाः वङ्गाः कलिङ्गाः । स्त्रियान्तु भार्गव्यः ।

४२८ । ढघे कात् ष्णीकक्कसीनेया स्वानितस्य ॥

कात्परा एते पूर्व्वे च स्तेतोऽनितस्य स्युर्ढघे च वाच्ये । तर्कं वेत्ति अधीते वा तार्किकः पदकः क्रमकः वैयाकरणः वाचा कृतं वाचिकं पाणिनीयं शक्त्या युध्यते ऽसौ शाक्तीकः याष्टीकः तिष्येण युक्ता रात्रिः तैषी पौषी छत्राय साधुः छात्रियः यज्ञाय हितं यज्ञियं मथुराया आगतः माथुरः इह भवं ऐहिकं कदाचिद्भवं कादाचित्कं ग्रामीणः ग्राम्यः मूर्द्धन्यः नादेयः शालीय नागरः अग्रः ।

४२९ । व्यटेर्लोपोऽनाराच्छस्वतोऽच्येऽयौ ॥

पौत्रःपुनिकः वाह्यः वाह्लीकः ।

४३० । न ट्ं तसौत्वस्त्यर्थे च ॥

अथावचि ये च ते पूर्वं टसंज्ञं न स्यात् तान्तसान्तौ तु अस्त्यर्थे च । आरातीयः शाश्वतिकः ।

४३१ । अह्नोऽह्लोऽनीने ॥

आह्निकम् । ईने तु द्व्यहीनः । सुपाञ्चालकः अर्द्धपाञ्चालक । दौवारिकः सौवरं सौवं सौवस्तिकं सौवादुमृदवं वैयल्कसं शौवं शौवनं स्वैयक्तं सौवं सौवाध्यायिकं सौवग्रामिकं नैयग्रोधम् । एकेतिकिं न्याग्रोधमूलिकं शौवापदं श्वापदं नैयङ्कवं न्याङ्कवं श्वागणिकम् ।

४३२ । विकारसंघभावेदंहितस्वार्थीदौ ॥

एष्वर्थेषु च ते त्याः स्युः । हेम्नो विकारः हैमः आप्यः आग्नेयः भिक्षाणां समूहः भैक्ष्यं आङ्गं गाणिक्यं राजकं गुरोर्भावः गौरवं यौवनं

साम्यं वैरूप्यं राज्यं सौहार्द्दं विष्णोरिदं वैष्णवं तदीयं माघवनम् । श्यौवनम् ।

४३३ । ऋट्द्रोये ॥

पित्र्यम् ।

४३४ । हन्षण्ष्टतराज्ञामुङ्लोपः ष्णे ॥

वार्त्तघ्नं पौष्णं धार्त्तराज्ञम् । एषां किं सामनम् ।

४३५ । युष्मदस्मत्त्वन्मदां युष्माकास्माकतवकममकाः ष्णीने ॥

यौष्माकं यौष्माकीणं आस्माकं आस्माकीनं तावकं तावकीनं मामकं मामकीनं सूर्य्याय हितं सौरीयं आगस्तीयं आत्मनीनं चोर एव चौरः त्रैलोक्यं रामकः ।

४३६ । केऽकः स्वोहेतु वा ॥

कन्यका सुकन्यकः सुकन्याकः शिवोदेवता यस्यासौ शैवः शाक्तेयः ।

४३७ । त्वतौ भावे ॥

साधुत्वं जड़ता पाचकत्वं ब्राह्मणीत्वम् ।

४३८। लोकोऽर्वात्सः षस्ति।

अर्वाल्लोकः सः षः स्यात् तद्धिते ते। यजुष्ट्वम्। धीत्तुगीस्त्वम्।

४३९। चृत्साम्ये॥

उपमानार्थे चृत् स्यात् कृष्ण इव कृष्णवत्।

४४०। मतुरस्त्यर्थे॥

श्रीरस्ति यस्यासौ श्रीमान् विदुष्मान् दोष्मान्

४४१। मोङमझपाद्वतुः॥

मकारोङोऽवर्णोङोमकारान्तादवर्णान्ताज्झपान्ताच्च वतुः स्यादस्त्यर्थे। लक्ष्मीवान् यशस्वान् किम्वान् ज्ञानवान् विद्यावान् विद्युत्वान्

४४२। स्वञ्ज धास्मायाद्विन् वा॥

स्रग्वी मेधावी तेजस्वी मायावी। पक्षे स्रग्वानित्यादि।

४४३। नैकाजादिन् वा॥

अनेकाचोऽवर्णान्तादिन् वा स्यादस्त्यर्थे। ज्ञानी शिखी।

४४४। मं कंभ्यां-ययुततितवभाः॥

शंयः शंयुः शन्तः शन्तुः शन्तिः शंवः शंभः ।

४४५ ॥ गोत्वणमेधाद्दन्तकाण्डद्युव लवलिपर्व्वचूडा फेनलोमपामप्रज्ञा मधुकेशरजःफलोर्णाहङ्कनिद्राऽर्शोवा तादेर्मिन्सेरोरेरमोलेभतलेलशनण रववलेनय्वारकाल्वकिन् वा ॥

एभ्य एते क्रमात् स्युरस्त्यर्थे वा । गोमी ।

४४६ ॥ नाम्नरऽस्त्यर्थेऽचोर्घः ॥

स्वामी त्वगसः मेधिरः रथिरः दन्तुरः काण्डीरः अण्डीरः द्युमः द्रुमः वलूलः वातूलः वलिभः तुन्दिभः पर्व्वतः मरुत्तः चूडालः मांसलः फेनिलः पिच्छिलः लोमशः रोमशः पामनः अङ्गना प्राज्ञः श्राद्धः मधुरः कुञ्जरः केशवः मानवः रजस्वला कृषीवलः फलिनः बर्हिणः ऊर्णायुः अहंयुः शृङ्गारकः वृन्दारकः निद्रालुः दयालुः अर्शसः वैजयन्तः वातकी अतिसारकी ।

४४७ । वाग्मिवाचाटवाचालाः ॥

वाचोऽस्त्यर्थे एते निपात्यन्ते ।

४४८ । जनबन्धादिगोरथवाता-त्तेनत्वकड्योलं संघे ॥

जनता वन्धुता खलिनी हलिनी गात्रा रथ-कड्या वातूलः ।

४४९ । संख्याया डट् पूरणे ॥

एकादशानां पूरणः एकादशः ।

४५० । नोऽसंख्यादेर्मट् ॥

असंख्यादेर्नान्तसंख्याया मट् स्यात् पूरणे । पञ्चमः ।

४५१ । तमट् षष्ट्यादेः ।

असंख्यादेः षष्ट्यादेः पूरणे तमट् स्यात् । षष्टितमः सप्ततितमः । संख्यादेस्तु एकषष्टः ।

४५२ । शतादिमाससम्वत्सरात् ॥

एभ्यस्तमट् स्यात् पूरणे । शततमः एकशत-तमः मासतमः संवत्सरतमः ।

४५२ । विंशत्यादेर्वा ॥

विंशतितमः विंशः त्रिंशत्तमः त्रिंशः ।

४५४ । चतुःषड्डतिकतिपयात्थट् ॥

चतुर्थः षष्ठः कतिथः कतिपयथः ।

४५५ । बहुगणपूगसंघातोस्तिथट् तलोपश्च ॥

बहुतिथः यावतिथः

४५६ । द्वितीयतृतीयतुर्य्यतुरीयाः ॥

एते निपात्याः ।

४५७ । संख्यायाधाच प्रकारे ॥

चतुःप्रकारं चतुर्द्धा ।

४५८ । द्वैधं द्वेधा त्रैधं त्रेधा षोढै कध्यं वा ॥

एते निपात्यन्ते वा प्रकारे । पक्षे द्विधा त्रिधा षड्धा एकधा ।

४५९ । संख्याया अवयवे तयट् ॥

चतुरवयवं चतुष्टयम् ।

४६० । द्वित्र्योर्वा अयट् ॥



द्वयं द्वितयं त्रयं त्रितयम् ।

**४६१ । तरतमौ द्विबहूनामेकोत्कर्षे ॥**

द्वयोरेकस्यातिशये तरो बहूनां तमः स्यात् अयमनयोरतिशयेन विद्वान् विद्वत्तरः । अयमेषामतिशयेन विद्वान् विद्वत्तमः । शुभ्रुतरा शुभ्रुतमा ।

**४६२ । रूपकल्पेचेवूपस्थंवात्तुब्रिपुम्वञ्च ॥**

चकारात्तरतमरूपकल्पेषु ईवन्तमूवन्तञ्च स्थं स्याद्वा उदृदित्तु पुम्वञ्च । स्त्रितरा स्त्रीतरा वामोरुतरा वामोरूतरा । विदुषितरा विदुषीतरा विद्वत्तरा सतितरा सतीतरा सत्तरा ।

**४६३ त्यादेश्च रूपः ॥**

लेस्त्यादेश्चोत्कर्षे रूपः स्यात् । पटुरूपः पचतिरूपम् ।

**४६४ । किमेव्याश्चाद्रव्येचतरां चतमाम् ॥**

किम एदन्ताद्व्यात्त्याद्यन्ताच्च द्विबहूनामेकोत्कर्षे तरां तमां स्तो न तु द्रव्ये । किन्तरां

प्राञ्चतरां उच्चैस्तरां पचतितराम् । एवं चत-
माम् । द्रव्ये तु उच्चैस्तरस्तरुः ।

४६५ गुणाद्वेष्ठेयसू ॥

गुणवाचिनो द्विवह्वनामेकोत्कर्षे क्रमादिष्ठे-
यसू ईयस्विष्ठौ वा स्तः ।

४६६ । ओमंश्च डिन्नैकाचः ॥

ञिरिमन् इष्ठ ईयसुश्च अनेकाचो लेः परो-
डित् स्यात् । लघिष्ठः लघीयान् ।

४६७ । लुङ्मद्वद्विनाम् ॥

मतिष्ठः मेधिष्ठः ।

४६८ । टन् लोप्यः ॥

करिष्ठः ।

४६९ । वाढान्तिकस्थूलदूरयुवक्षिप्र-
क्षुद्रप्रियस्थिरस्फिरोरुगुरुवहुलतृप्र-
दीर्घह्रस्ववृद्धवृन्दारकाःसाधनेदस्थव-
दवयवक्षेपक्षोदप्रस्थस्फवरगरवंहत्रप-
द्राघह्रसवर्षवृन्दाः ॥

एषां स्थाने क्रमादेतेस्युरूर्यादिषु । साधिष्ठः
नेदिष्ठः स्थविष्ठः दविष्ठः यविष्ठः क्षेपिष्ठः क्षो-

दिष्ठः प्रेष्ठः स्थेष्ठः स्फेष्ठः वरिष्ठः गरिष्ठः वंहिष्ठः त्रपिष्ठः द्राघिष्ठः ह्रसिष्ठः वर्षिष्ठः वृन्दिष्ठः ।

४७० । प्रशस्यस्य श्रः ॥

श्रेष्ठः ।

४७१ । ज्योऽवृद्धस्य च यस्त्वाग्राः ॥

वृद्धः प्रशस्यस्य च ज्यादौ ज्यः स्यात् तस्माच्चे-यसोरी आः स्यात् । ज्येष्ठः ज्यायान् ।

४७२ । पृथुमृदुकृशभृशदृढपरिवृढ-स्यद्रः ॥

एषामृकारस्य ज्यादौ रः स्यात् । प्रथिष्ठः ।

४७३ । युवाल्पौ कन् वा ॥

कनिष्ठः यविष्ठः अल्पिष्ठः एवमीयसुः ।

४७४ । गुणादिमन् भावे ॥

गुणवाचिन इमन् स्याद्भावे । लघिमा ।

४७५ । भूयोभूमभूयिष्ठाः ॥

बहोरीयस्विमन्निष्ठान्तस्य क्रमादेते निपात्यन्ते।

४७६ । त्यादेश्चोने कल्पदेश्यदे-शीयाः ॥

लेत्यादेः .... ईषदूनेऽर्थे एते स्युः । ईषदूनो

विद्वान् विद्वत्कल्पः विद्वद्देश्यः विद्वद्देशीय तार्किकदेशीया पचतिकल्पम् ः

४७७ । लेर्बहुः प्राक् ॥

ईषदूनः पटुः बहुपटुः ।

४७८ । पाशः कुत्सायाम् ॥

कुत्सितो भिषक् भिषक्पाशः ।

४७९ । चरट् भूतपूर्वे ॥

भूतपूर्वेऽर्थे चरट स्यात् । भूतपूर्वश्चाढ्यः आढ्यचरः ।

४८० । ष्यारूप्यश्च ॥

ष्यन्ताद्रूप्यश्चरट् च स्यात् भूतपूर्वेऽर्थे । कृष्णस्य भूतपूर्वागौः कृष्णरूप्यः कृष्णचरः शुभ्रारूप्यः शुभ्रचरः ।

४८१ । बह्वल्पार्थात् कात्स्नशस् वा ॥

बह्वर्थादल्पार्थाच्च कात्परश्शस् स्याद्वा बहुशोदेहि भूरिशः अल्पशः स्तोकशः ।

४८२ । संख्यैकार्थाद्वीप्सायाम् ॥

कति कति कतिशः गणशः यावच्छः तावच्छः द्विशः पादशः ।

४८३। चकृत्वस् वारे॥

कति वारान् भुङ्क्ते कतिकृत्वः गणकृत्वः प-
ञ्चकृत्वः।

४८४। सुज्द्वित्रिभ्यः॥

एभ्यः सुच् स्याद्वारे। चतुः द्विः त्रिः।

४८५। मयट् तद्रूपे॥

तदात्मकेऽर्थे मयट् स्यात्। विष्ण्वात्मकं विष्णु-
मयं वाङ्मयम्।

४८६। प्रकारे जातीयः॥

तार्किकजातीया।

३८७ वित्ते चुञ्चुचणौ॥

विद्याचुञ्चुः विद्याचणः।

४८८। निर्वृत्ते भावादिमः॥

पाकिमः।

४८९। पशुभ्यः स्थानद्विषट्केगोष्ठ-
गोयुगषड्गवम्॥

गोगोष्ठं गोगोयुगं गोषड्गवम्।



४९०। ... [illegible] ...

अपकृष्टा मुण्डा मुण्डारः गम्भीरः कुटीरः उच्चतरी ।

४६२ । पीलुतिलोमाकर्णादेः कुण तैलकटजाहं पाकस्नेहरजोमूले ॥

पीलुकुणः तिलतैलं उमाकटः कर्णजाहमृद्ध ।

४६२ । क्षेत्रे शाकटशाकिनौ ॥

इक्षुशाकटं इक्षुशाकिनम् ।

४६३ । इतोऽस्य जाते ॥

फलितम् ।

४६४ । च्विः कृभ्वस्स्वभूततद्भावेऽस्वावीर्घावव्यस्य ॥

अभूततद्भावेऽर्थे कृभ्वस्तिषु परेषु च्विः स्यात् तस्मिं स्वावर्णस्वयोरीकारदीर्घौ स्तो न तु व्यस्य ।

४६५ त्योवमात्वोलोप्यः ॥

वकारमात्रस्त्योलोप्यः स्यात् । अकृष्णं कृष्णं करोति कृष्णीकरोति कृष्णीभवति कृष्णीस्यात् ।

४६६ । यङ्ङ्यक्ये चट्री ॥

ऋकारो री स्यात् यङि ङ्य क्ये च्वौ च । मात्रीकरोति ।

४९७। भद्रस्वकुस्तोऽतरजोर-होऽन्त्यलोपश्च ॥

भद्रीकरोति ।

४९८। कात्स्न्र्येत्योयोः संपद्यकादौ चसात्वा ॥

साकल्ये ऽधीनत्वेच सम्पद्यति कृवस्तिषु परेषु चसात् स्याद्वा । कृत्स्नं लवणं जलं सम्पद्यते जलसात् सम्पद्यते । राजायत्तं सम्पद्यते राज-सात् सम्पद्यते ।

४९९। देये त्राच्च ।

देयेऽर्थे त्राच्चसाच्च स्यात् सम्पद्यादौ । देवाय देयं करोति देवत्राकरोति देवसात्करोति ।

५००। नैकाचोऽव्यक्तानुकरणाड्डा च्वाऽनितौद्विश्च ॥

अनेकाचो ऽव्यक्तानुकरणात् सम्पद्यादौ डाच् स्याद्वा नत्वितौ तस्मिंश्च द्विर्भावः ।

५०१॥ तस्योप्योऽतष्टित्वितौ हेत्व-न्तोवा ॥

तस्यादन्तस्य तलोप्योऽडाचि इतौ तु टिर्लोप्यः
इस्त्वन्तो लोप्यो वा । पटपटाकरोति । एका-
चस्तु स्तकरोति । इतौ तु पटदिति करोति
पटिति पटत्पटेति पटत्पटदिति ।

५०२ । तीयसम्बबीजसंख्यादिगुणात्
कञिकर्षौ ॥

एभ्यः करोतौ डाच् स्यात् कर्षौ । द्वितीयं
कर्षणं करोति द्वितीयाकरोति सम्बाकरोति
बीजेन सह कर्षणं करोति बीजाकरोति द्विगु-
णाकरोति ।

५०३ । समयनिष्कुलदुःखशूलसत्याद्
यापननिष्कोषप्रातिकूल्यपाकाऽशपथे ॥

एभ्यः क्रमादेष्वर्थेषु डाच् स्यात् कञि परे
समया करोति निष्कुलाकरोति दुःखाकरोति
शूलाकरोति सत्याकरोति ।

५०४ । सपत्रनिष्पत्रात् प्रियसुखा-
न्मद्रभद्रात् पीडानुकूल्यवपने ॥

एभ्यः क्रमादेष्वर्थेषु डाच् स्यात् कञि । सप-

त्राकरोति निष्पत्राकरोति मृगं प्रियाकरोति सुखाकरोति मद्राकरोति भद्राकरोति ।

५०५ ॥ दघ्नमात्रद्वयसट् माने ॥

परिमाणार्थे एते स्युः । गजपरिमाणो गजदघ्नः गजमात्रः गजद्वयसः ।

५०६ ॥ संख्याया‌न् शतोडिन् ॥

दशी त्रिंशी ।

५०७ । कतियतिततियावत्तावदेतावत् कियदियन्तः ॥

किं यत्तदां डत्यन्तानां यत्तदेतत्किमिदमां वत्वन्तानामेते क्रमात् निपत्यन्ते माने ।

५०८ । दशादेर्डायुते शतादौ ॥

एकादशं शतं विंशं शतम् ।

५०९ ॥ किंयत्तदेकान्यात् द्विबहूनामेकनिर्द्धारे डतरडतमौ ॥

अनयोः कतरोवैष्णवः । एषां कतमः शैवः ।

५१० । तस् ङेः

ङेः स्थाने तस् स्यात् । ग्रामतः सर्वतः अमुतः ।

५११ । देवाद्देर्द्दीम्नोस्त्राच्

देवत्रा वन्दे रमे वा ।

५१२ । ष्विवद्वोस्त्रोऽद्यादेः प्त्राः ॥

सर्व्वेद्वोत्र परस्याः प्त्रास्त्रः स्यात् नतु द्यस्मद्युष्मदः । सर्व्वस्मिन् सर्व्वत्र तत्र वङ्गत ।

५१३ ।सर्व्वकात् काले दा ।

सर्व्वस्मिन काले सर्व्वदा ।

५१४ । किमन्ययत्तदोर्हिंश्च ॥

त्रभ्यः प्त्राः र्हिंदा च स्यात् । कस्मिन् काले कर्हिं कदा ।

५१५ । तदोदानीं वा ॥

तदानीं तर्हिं तदा।

५१६ । पूर्व्वान्यान्यतरेतरापराध-रोत्तरोभयाद्देद्युसहि ॥

पूर्व्वस्मिन्नहनि पूर्व्वेद्युः ।

५१७ । दिक्शब्दातदिग्देशकाले स्तात् प्रोपोप्तरोऽचोलुक् ॥

[illegible]

पुरस्तात् प्राक् ।

५१८ । वैनोपि ॥

पूर्व्वेण ।

५१९ । दक्षिणोत्तरादाहि ॥

दक्षिणा दक्षिणाहि उत्तरा उत्तराहि ।

५२० । वाधराद्वात्ताः ॥

अधरस्मात् अधरात् दक्षिणस्मात् दक्षिणात् ।

५२१ । पूर्व्वाधरावराःपुराधाराः-स्तादसोः ॥

पुरस्तात् पुरः अधस्तात् अधः अवस्तात् अवः । अतएव अस् ।

५२२ । सवर्व्याच् प्रकारे ।

येभ्यस्त उक्तस्तेभ्यः प्रकारे थाच् स्यात् स च तद्वत् । सर्व्व प्रकारं सर्व्वथा ।

५२३। कुतः क्व कुह कुत्रेतोऽतोऽत्रेह-सदैतर्ह्यधुनेदानीं पश्चादुपर्य्युपरि-ष्टात्परेद्यविसद्योऽद्यैषमःपरुत्परा-रीत्यं कथम् ॥

एते निपात्यन्ते । कस्मात् कुतः कस्मिन् क्व कुह कुत्र अस्मात् इतः एतस्मात् अतः एतस्मिन् अत्र अस्मिन् इह सर्व्वदा सदा अस्मिन् काले एतर्हि अधुना इदानीं पश्चिमं पश्चात् ऊर्द्धं उपरि उपरिष्टात् परस्मिन्नहनि परेद्यवि समानेऽह्नि सद्यः अस्मिन्नहनि अद्य अस्मिन वर्षे ऐषमः पूर्व्वस्मिन् वर्षे परुत् पूर्व्वतरस्मि न्वर्षे परारि इदं प्रकारं इत्थं किं प्रकारं कथम् ।

५२४ । त्यलाद्यचिरदक्षिणाद्यादेस्त्यष्टन्लत्यणमा भवाद्यौ ॥

एभ्य एते क्रमात् स्युर्भवाद्यर्थे । त्यलत्यः तलत्यः अद्यतनी ह्यस्तनी चिरत्नः परत्नः दाक्षिणात्यः पाश्चात्यः आदिमः मध्यमः ।

५२५ । किमः क्तान्ताच्चिच्चनौ ॥

कस्यचित् कदाचित् कस्यचन कदाचन ।

५२६ । आदिस्तः ॥

चैक्याच्चु दसह्योऽः इत्येतमकारमारभ्ययस्त्यउक्ताः स तसंज्ञः स्यात् ।

इति तपादः ।



इति साध्यन्ताध्यायः ।

## संज्ञा।

### अथ त्यादिरुच्यते।

५२७। धोस्तिप् तस् अन्ति सिप् थस् थ मिप् वस् मस्। ते आते अन्ते से आथे ध्वे ए वहे महे 'को' यात् याताम् युस् यास् यातम् यात याम् याव याम। ईत ईयाताम् ईरन् ईथास् ईयथाम् ईध्वम् ईय ईवहि ईमहि 'खो' तुप् ताम् अन्तु हि तम् त आनिप् आवप् आमप्। ताम् आताम् अन्ताम् स्व आथाम् ध्वम् ऐप् आवहैप आमहैप् 'गो' दिप् ताम् अन् सिप् तम् त अमप् व म। त आताम् अन्त थास् आथाम् ध्वम् इ वहि महि 'घो' दि ताम् अन् सि तम् त अम व म। तन् आताम् अन्त थास् आथाम् ध्वम् इ वहि महि 'टो' णप् अतुस् उस् थप् अथुस् अ णप् व म। ]
ए आते इरे से आथे ध्वे एवहे महे

'ठो' ता तारौ तारस् तासि तास्थस् तास्थ तास्मि तास्वस् तास्मस् । ता तारौ तारस् तासे तासाथे ताध्वे ताहे तास्वहे तास्महे 'डो' यात् यास्ताम् यासुस् यास् यास्तम् यास्त यासम् यास्व यास्म । सीष्ट सीयास्ताम् सीरन् सीष्ठास् सीयास्थाम् सीध्वम् सीय सीवहि सीमहि 'ढो' स्यति स्यतस् स्यन्ति स्यसि स्यथस् स्यथ स्यामि स्यावस् स्यामस् । स्यते स्येते स्यन्ते स्यसे स्येथे स्यध्वे स्ये स्यावहे स्यामहे 'तो' स्यत् स्यताम् स्यन् स्यस् स्यतम् स्यत स्यम् स्याव स्याम । स्यत स्येताम् स्यन्त स्यथास् स्येथाम् स्ये स्यध्वम् स्यावहि स्यामहि 'थो'

एतानि साशीतिशतसंख्यकानि धोः पराणि प्रयुज्यन्ते ।

५२८ । कीखीगीघीटीठीडीढीती थ्योऽष्टादशशः ॥

तान्यष्टादश्याष्टादश क्रमादेतत्संज्ञानि स्युः ।

५२६ । पञ्च रः भिच ॥

ताः पञ्च रसंज्ञाः स्युः भिच ।

५३० । नवशः पमे ञितोऽन्यङि-ङ्ग्रां घे ।

तानि नव नव क्रमात् पमसंज्ञानि स्युस्ते च ञितोश्चोः परे स्तः तदन्यङिङ्ग्रान्तु क्रमेण स्तो घे ।

५३१ । ङिदपिद्रः ।

अपिद्रो ङित् स्यात् ।

५३२ । कित् ठौढौपं ॥

अपित् ठौ ढत्राः पञ्च कित् संज्ञं स्यात् ।

५३३ । दाधा दा ॥

अपिद्दाधा च दासंज्ञः स्यात् ।

५३४ । यलोऽचेग्जिः ॥

अचा युक्तस्य यलस्य स्थाने इक् क्रमाज्जिसंज्ञः स्यात् ।

५३५ । सकृद्द्विस्तु वा ॥

जिः पुनर्न स्यात् द्विस्तु वा स्यात् ।

५३६ । प्रागचकार्य्यादचि द्विः ॥

अचिपरे अच्कार्य्यात् प्राक् द्विः स्यात् ।

५३७ । द्वेः पूर्व्वः खिः ॥

द्वेर्धोः पूर्व्वाभागः खिसंज्ञः स्यात् ।

५३८ । खर्वौ घुरु ॥

खो घुसंज्ञो धौ रुसंज्ञः स्यात् ।

५३९ । खः स्थे रुः ॥

स्थे परे खोरुसंज्ञः स्यात् ।

इति संज्ञा पादः ।

भवत् ।

भूतिप् इति स्थिते ।

५४० । घे शप् ॥

रे परे धोः शप् स्याद्वेऽर्थे ।

५४१ । गुर्भूङस्याकङिति ॥

अन्त्यस्य घुसंज्ञोङश्च गुः स्यान्नतु किति ङिति । भवति भवतः ।

५४२ । लोपोऽतोऽदेचोः ॥

अकारस्य लोपः स्यादकारे एचि च परे । भ-वन्ति भवसि भवथः भवथ । १०८ । चाक्तिम-भवि । भवामिभावावः भवामः ।

५४३ । भुवः प्राप्तौ वा मम् ॥

प्राप्तौ भुवो मं स्याद्वा घे । भवते ।

५४४ । याथातोऽतः ॥

अकारात् परयोराथातोराकार ईः स्यात् । भवेते भवन्ते भवसे भवेथे भवध्वे भवे भवावहे भवामहे ।

५४५ । स्यायायुस्यामामोयुसीयम् ।

अकारात्परेषां स्या या युस् याम् एषां स्थाने ई ईयुस् ईयम् एते क्रमात् स्युः । भवेत् भवेतां भवेयुः भवेः भवेतं भवेत भवेयं भवेव भवेम । भवेत भवेयातां भवेरन् भवेयाः भवेयाथां भवेध्वं भवेय भवेवहि भवेमहि । भवतु भवतां भवन्तु ।

५४६ । हेर्लोपोऽस्योम्नोश्च ॥

अकारादस्याभ्यामुम्नुभ्यांश्च हेर्लोपः स्यात् । भव भवतं भवत भवानि ।

५४७। व्यय ग्रनुकारडाञ्झिकणेऽलंसन्ननोऽदोऽन्तःपुरोऽस्तन्तिरःकारिकोर्व्यादेर्धौ सः ॥

एषां व्यानां धौ परे सः स्यात् ।

५४८। प्राग्वन्नोणोऽन्तरदुर्गैर्णादिहन्मीनाहिन्वानिप् प्रान्तजप्रोगदनदपतपददामासोहलवायाद्राप्सा वपवहप्रामचिदिहान्तनेसत्वननिंवीनिन्दनिचमवान्तहनोऽकखाद्यषान्तान्तनेः ॥

णादेर्धोर्हन्तेर्मीनातेर्हिनोतेरानिपः प्रान्तनप्रोगदाद्यन्तनेश्च नस्यान्तरोदुर्वर्जगेश्च परस्य णविधिहेतौ सति णः स्यात् । अनादेशस्वान्तहन्तेः कादिखादि षान्तवर्ज्जं ध्वन्तनेश्च वा स्यात् । अन्तर्भवाणि प्रभवाणि । दुरस्तु दुर्भवानि । भवाव भवाम । भवतां भवेतां भवन्तां भवस्व । भवेथां भवध्वम् भवै भभवावहै भवामहै ।

५४९। घोटीघोष्वम् धोरमा ॥

आसु परासु धोरम् स्यात् नतु माङ्योगे । अभवत् अभवतां अभवन् अभवः अभवतं अभवत अभवं अभवाव अभवाम । अभवत अभवेतां अभवन्त अभवथाः अभवेथां अभवध्वं अभवे अभवावहि अभवामहि ।

५५० । ध्यां सिः ॥

धोः सिः स्याड्याम् ।

५५१ । भूस्थापिबद्देनोलुक् पे ॥

एभ्यः सेर्लुक् स्यात् पे । अभूत् अभूताम् ।

५५२ । भुवोवन् टौव्यचि ॥

भुवो वन् स्यात् टौव्योरचि परे । अभूवन् अभूः अभूतं अभूत अभूवं अभूव अभूम ।

५५३ । वसोऽरस्य मनौदितः ॥

मनौदितो धोःपरस्यारस्य वसस्य इम् स्यात् । अभविष्ट अभविषातां ।

५५४ । मान्तोऽदनतः ॥

मस्यान्त इत्यस्य अत् स्यान्नत्वकारात् परस्य । अभविष्ट अभविषातां अभविषत अभविष्ठाः अभविषाथां ।

५५५ । धे सलोपो वा ॥

धे परे सस्य लोपो वा स्यात् ।

५५६ । टीठीढीधोढिचःसेमस्तुहलोवा ।

इचः परस्यासां धस्य ढः स्यात् सेमृहलात् परस्यतु वा स्यात् । अभविढ्वं अभविध्वम् । ६२ झपझसोरिति सस्य दः । अभविध्वम् अभविषि अभविष्वहि अभविष्महि ।

५५७ । धुर्ङ्विष्ठग्रङि ॥

ध्यामङि च धुर्ङिः स्यात् ।

५५८ । झभखथहर्घकृणा जवचप-जस्त्वचाः खेः ॥

खेर्झभ खथ हकार घं कवर्ग ऋवर्णानां क्रमाज्जव् चप् जकारस्तवर्गाकाराः स्युः ।

५५९ । भुवोऽङ् ठग्रां ढभावे तु वा ।

भुवः खेरङ् स्यात् ठग्रां ढभावयोस्तु वा । बभूव बभूवतुः बभूवुः बभूविथ बभूवथुः बभूव बभूव-विव बभूविम । बभूवे बभूवाते बभूविरे बभूविषे बभूवाथे बभूविढ्वे बभूविध्वे बभूवे बभूविवहे बभूविमहे । ढ भावे च । बभूवे बुभूवे इति प्रयोगौ । भविता भवितारौ भवितारः भवि-तासि भवितास्थः भवितास्थ भवितास्मि भवि-

तास्वः भविताध्मः । भविता भवितारौ भवि-
तारः भवितासे भवितासाथे भविताध्वे भवि-
ताहे भवितास्वहे भवितास्महे । भूयात् भू-
यास्तां भूयासुः भूयाः भूयास्तं भूयास्त भूयासं
भूयास्व भूयास्म । भविषीष्ट भविषीयास्तां
भविषीरन् भविषीष्ठाः भविषीयास्थां भविषीढ्वं
भविषीध्वं भविषीय भविषीवहि भविषीमहि ।
भविष्यति भविष्यत भविष्यन्तिः भविष्यसि
भविष्यथः भविष्यथ भविष्यामि भविष्यावः भवि-
ष्यामः । भविष्यते भविष्येते भविष्यन्ते भवि-
ष्यसे भविष्येथे भविष्यध्वे भविष्ये भविष्यावहे
भविष्यामहे । अभविष्यत् अभविष्यतां अभवि-
ष्यन् अभविष्यः अभविष्यतं अभिष्यत अभविष्यं
अभविष्याव अभविष्याम । अभविष्यत अभवि-
ष्येतां अभविष्यन्त अभविष्यथाः अभविष्येथां
अभविष्यध्वं अभविष्ये अभविष्यावहि अभवि-
ष्यामहि । भवतकि भवतकः प्रणि भवति प्रनि
भवति एवं चेतति इत्यादयः । चिती संज्ञाने ।

५६० । रुदादिभ्यस्सार्वधातुके ॥



इत्यादिस्सार्वधातुके ...

५६१ । झस्स्वाज्झसीमईमि से-र्लोपः ॥

झसात् स्वाच्च परस्य झसि ईमः परस्य ईमि सेर्लोपः स्यात् । अचेतीत् अचेतिष्टाम् ।

५६२ । अनुस्सिद्वेरभुवः ॥

सेर्द्वेश्च परस्मान् उस् नतु भुवः । अचेतिषुः अचेतीः ।

५६३ । खेराद्यचोलोप्योऽनुभस्खपाद्यन्तान्यस्याद्यन्तौ ॥

खेराद्यचः परो भागो लोप्यः स्यात् पश्चात् भसादि खपान्तोयदि स्योऽवशिष्टस्तस्यादिर्लोप्योयद्यन्याद्दशस्तस्यान्तोलोप्यः । चिचेत चिचिततुः चिचितुः । च्युतिर् च्च रणे ।

५६४ । श्रासुलिद्द्युत्पुषादेर्ङ्शीपेऌ श्विस्तन्भुविम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चु-रितस्तु वा ॥

श्रासोर्ऌकारेतो द्युतादेः पुषादेश्च ङः स्याद्दीपेश्चादेस्तु वा । अच्युतत् अच्योतीत् चुच्योत ।

श्च्युत निस्रोतने ।

५६५। स्यात् क्यपित् किद्वा ॥

५६६। हसुङ्गोर्लोपोऽणौ ॥

धोर्हसुङो नस्य लोपः स्यादणौ। ममथतुः ममन्थतुः मथ्यात्। कुथि हिंसासंक्लेशयोः।

५६७। नेदित पूजार्थाञ्चेः ॥

इदितो धोः पूजार्थाञ्चतेश्च नलोपो न स्यादणौ। अतएवेदितो नुम्। प्रनिकुन्थ्यात् ५३८ कादित्वान्न णः। षिधु गत्याम्।

५६८। स्वाद्यादिषणः सोऽष्ठैरष्वक्कष्ठिवाम् ॥

स्वादेरादौ स्थितयोः षणयोः सना सो नतु ष्ठैरष्वक्कष्ठिवाम्।

५६९। सेकसोऋसृपसृस्तृजस्तृस्त्या न्ये दन्त्यराजन्तसादयः षोपदेशाधवः ष्वक्कस्मित् स्वतस्वञ्जस्वपस्मिङश्च ॥

नोपदेशाल्लृषनृन्नर्द्दनाथनाधनन्दनक्कनृ नटः ॥

सेधति।

५७०। व्याच्छस्य गत्यर्थवदे सः ॥

गत्यर्थे वदे च धौ परदे व्यस्याच्छस्य सः स्यात्। अच्छसेधति ।

५७१। गीकः स्तुस्तुभसोसुवास्यान्त-सुञां स्यासेनिसञ्जस्वञ्जाऽगतिसेधा-ऽप्रतिसदाऽयङ्सिचानङ् स्तम्भाऽन्न व्यवस्वन्परिनिविसेवसुमनङ् सिवा-ऽनोङ् सहां सः षोऽप्यपि दृष्टस्याद्वे स्तु-द्वेस्च ॥

स्वादेरस्यान्तसुञः स्यादेरगत्यर्थसेधोऽप्रति पूर्व्वसदोयङवर्जसिचो ऽङवर्जस्तम्भोऽन्नार्थव्यव-पूर्व्वस्वनः पर्य्यादिपूर्व्वसेवसुम अङ्वर्जसिवश्चो वर्जसहाश्च गेरिकः परःसःषः स्याद्व्यन्त-दृष्टानां स्यादीनान्तं द्विरुक्तानाञ्च । न्यषेधत्। गतौ तु गङ्गां व्यसेधत् । षिधू ... व माङ्गल्ये च ।

५७२। वेमूदितस्वरचायस्फायप्या यसूतिसूयधूञरधादि निष्कुषोऽरव-

सोऽचुसुनोस्त्वच्याः ॥

एभ्योवसस्यारस्येम् स्याद्वा रौत्यादेस्तु ठीव-र्जम् । असेधीत् ।

५७३ । व्रजवद्रलजनिमोऽञिञ्विजा गुर्त्रिः सौपे ॥

व्रजेर्वदेररन्तस्यालन्तस्याजन्तस्य अनिमश्च सौ पे त्रिः स्यात् न तु जिञ्विजाद्रगणाम् । असै-त्सीत् असेधिष्टाम् ।

५७४ । ढभात्तयोधाऽधः ॥

ढभात् परयोस्तथयोर्धः स्यान्न तु धाञः । असैद्धाम् । खद स्थैर्ये वधे च ।

५७५ । हसादेः सेमोऽह्मरादित् चणश्वसवधो वोऽतः सौपे त्रिः ॥

हमयान्तादेकारेतः चणादेश्वान्यस्य समो हसादेरुङोऽकारस्य त्रिः स्याद्वा सौ पे । अन्य-खादीत् । ५३८ स्वादित्वान्न णः । अखदीत् ।

५७६ । ञिणत्यन्तोरजुङतोः ॥

धोरन्त्यस्येच उङ्ङकारस्य च त्रिः स्यात्

ञिति णिति च । चखाद ।

५७७ । णप्यन्तेर वा ॥

चखाद चखद । गद भाषे । प्रणिगदति । वद व्यक्तायां वाचि ।

५७८ । तृफलभजत्रपश्रथग्रन्थदम्भा-द्यन्तास्यहसां व्याः कित्सेमयप्यद्रेः खिलोपश्चाशषद्दवाद्यन्यथाखिणुन-लोपिनां जृवमभ्रमत्रसफणादिवधार्थ राधान्तु वा ॥

चादीनामाद्यन्तस्थितास्यहसानाञ्चाकारः व्याः किति सेम्यपि च एः स्यात् खिलोपश्च । नतु शषदेर्दवकारादेरन्यथाभूतखेर्णुमतो नलो-पिनश्च जृवमभ्रमत्रसफणादीनां हिंसार्थस्य राधेश्च वा स्यात् । वेदतुः वेदुः वेदिथ । अन्य-था भूतखेस्तु चखदतुः । णद शब्दे । ५५६ स्वाद्यादीतिणो नः । नदति प्रणिनदति अर्द पीड़ायाम् ।

५७९ । स्वान्तादादृदाद्यन्नोः खे-रान् व्यां वा लाञ्के ॥

स्यान्तो यो ऽकारादिस्तस्य ऋकारादेरश्नो-
तेश्च खेटान् स्यात् श्याम् श्राच्छतेस्तु वा । आ-
नर्ह । इदि परमैश्वर्ये ।

५८० । भूयोऽसञ्जादेः ॥

अञ्जादेरमि कृते पुनरम् स्यात् । ऐन्दत् ।

५८१ । विंजादिदयायासत्यानेका-
॥चोऽनृच्छूर्णा श्याखाम्

रुसंज्ञजादेर्दय अय आस एभ्यस्तु : न्ता-
दनेकाचश्च आम स्यात् श्यां नतु ऋच्छूर्णा: ।

५८२ । भ्वस्कृन्वामः ॥

भू अस कृ एते आमन्तादनु प्रयुज्यन्त ।
इन्दाम्बभूव इन्दामास इन्दाञ्चकार ।

५८३ । नेमऽसुमकृसृटभ्स्तुद्रुश्रुस्रो
रेव थ्याः ॥

एभ्यश्चरा एव इम न स्यात् अन्यस्मादनिमो-
ऽपि स्यात् । इन्दाञ्चकर्थ । णिदि कुत्सायाम् ।
प्रणिन्दति प्रनिन्दति । उख गतौ ।



५८४ । खेयौ रियुवर्णौ ॥

खेरिवर्णोवर्णयोः क्रमादियुवौ स्याताम् अर्णे परे। उवोख। अर्णे किम् ऊखतुः। अन्चु गतिपूजनयोः। ५६७ नेदित् पूजार्थाञ्चोरिति अञ्च्यात्। गतौ तु अच्यात् म्रुचु। ५६४ ग्लासु-लिङ्घुत्रदिति ङो वा। अम्रुचत् अम्रोचीत्। एवं म्लुचुग्लुचुग्रुचुग्लुञ्चु। आछि आयामे। आनाञ्छ आञ्छ। वज गतौ। ववजतुः ववजुः ववजिथ। ५७८ वादित्वान्न एः। व्रज गतौ। ५७६ व्रजवदेति व्रिः। अव्राजीत्। अज गतौ पेक्षणे च।

५८५। व्यजोऽरेवाल्वनवस्यऽवञलक्रापि॥

अजतेररे विः स्यात् अनले वसे च वा स्यात् न तु घञादौ।

५८६। नेमेकाजादाद्युदृतोऽश्विश्रिडी-श्रीयुरुनुस्नुत्तुच्णु वुः॥

श्व्यादेरन्येभ्य एकाज्भ्य आदन्तेवर्णान्ता-दन्त ऋदन्तेभ्य इम न स्यात्। अवैषीत् आजीत् विवाय।

५८७। मुञोरणवचोयुव्युयोर्व्याव-स्यान्नैकाचोर्व्याः॥

श्नोर्धातश्च इवर्णोवर्णयोरणावचि इयुवौ स्तोऽनेकाचोसु अस्यात् परयोः क्रमाद्वर्णोवर्णयोर्वयौ स्तः । विव्यतुः विव्युः ।

५८८। सृजदृशोऽचपाठात्वतोनित्यानिमतुस्थपोवेमऽनृव्येऽदः ॥

सृजेदृंशेरजन्तात् भ्वादिपाठेऽकारवतोनित्यमिम्नन्हिततत्ल्यात्थपद्रम वा स्यात् नतु ऋ व्येञ अद एभ्यः । विलायिथ विवेथ । चि ञ्चये :

५८९ । घौऽज्ये ॥

अजन्तस्य घः स्यादरे ये परे । चीयात्॥ कटे वर्षावरणयोः । अकटीत् । ५.७५ एदित्वान्न विः । गुपूरक्षणे ।

५९०। कमक्रतोगुपूधूपपणपनोञिङीयङायाधुः ॥

कमोञिङ् ऋतेरीयङ् गुपादेराय: स्यात् स्वार्थे तदन्तस्य धुसंज्ञः । गोपायति ।

५९१। वार्धे ॥



एभ्य एते वा स्युरदरे विषये । अगोपायीत्

अगोपीत् अगौप्सीत् गोपयामास जुगोप । एवं धूप तापे । तपौ सन्तापे । ऐदित्वान्नेम अताप्सीत् । चमु अदने ।

५६२ । ष्ठिवुक्लमाचमोऽपि र्घः ।

एषां र्घः स्यादपि । आचामति । आङः किं चमति विचमति । ५७५ मान्तत्वान्न त्रिः । अचमीत् । क्रमु पादविक्षेपे ।

५६३ । क्रमक्लमभ्रमभ्रासभ्लासत्रस लुटलषयसंयसः श्यन् वारे घे ॥

एभ्यो घेऽर्घे श्यन् वास्यात् रे परे । क्रम्यति

५६४ । क्रमः पेऽपि र्घः ।

क्रामति ।

५६५ । सुक्रमोऽमेऽत्रवसद्म् ।

आभ्यां वसस्यारस्य द्म् स्यान्न तु मे । अक्रमीत् । आयमूपरमे ।

५६६ । स्थादानपाघ्राध्माम्नार्त्ति दृशशत्सद्ङमिष्यमजनां तिष्ठयच्छपिबज जिघ्रधमनर्च्छपश्यशीयसीदगच्छेच्छय च्छजाः ष्णिति ॥

एषामेते क्रमात् स्युः ञिति परे । यच्छति ।

५६७ । यमरमनमातः पे सेरिम सन् चैषाम् ॥

यमादेरादन्ताच्च सेरिम् स्यात् पे तेषाञ्च सन् । अयंसीत् अयंसिष्टाम् । ५८८ स्तुजहृग्रेति-वेम । येमिथ ययन्थ । एवं नमौ । इय गतौ । अह्यीत् ५७५ यान्तत्वान्न व्रिः । दल भेदे ५७२ व्रजवदेति व्रिः अदालीत् । ञि फला विशरणे । फेलतुः फेलुः फेलिथ । त्सर छद्म-गतौ । अत्सारीत् । ष्ठिवु निरसने । ५८२ ष्ठिवुक्लमेति घः । ष्ठीवति ।

५९८ । ष्ठिवज्राद्योः खेष्ठक्रोस्त वा ॥

तिष्ठेव टिष्ठेव ष्ठीव्यात् । जि जये ।

५९९ । जेर्गिः सन्क्योः ॥

जिगाय । रच पालने । प्रनिरचति ५४८ चान्तत्वान्न णः । अचू व्याप्तौ ।

६०० । वाचक्षणार्यतचः ञ्नुर्धेरे ॥

अभ्यां रे परे ञ्नुः स्याद्वा घे ऽर्थे । अक्ष्णोति

५७२ उदित्वादिड्वा । आचीत् । २१४ स्योदेः स्लोपः ।

**६०१ । षढोः कः से ॥**

षस्य ढस्य च कः स्यात् सकारे परे । आचीत् आचिष्टाम् आष्टाम् आचिषुः आचुः । एवं तचू कार्श्ये । कृशार्थेति किं निभत्सने सन्लघति । निच चुम्बने । प्रणिचति प्रनिचति ।

**६०२ । कृषमृशस्पृशतृपदृपसृपः सिष्टां वा ॥**

एभ्यः सिर्वा स्याद्याम् ।

**६०३ । वृद्रोऽकिज्झसेहशसृजोस्तु नित्यम् ॥**

कृषादीनामृकारोरः स्याद्वाऽकिज्झसे हशसृजोस्तु नित्यम् । अक्राचीत् ।

**६०४। हशषोऽनिमिजुडोऽह शःषक्ष्यां श्लिषस्त्वालिङ्गने ॥**

अनिमिजुडोहशषान्ताह्वशवर्जात् सक् स्याञ्चां श्लिषतेस्त्वालिङ्गने ऽर्थे । अक्षचत् ॥ हष हिंसायाम् ।

६०५। वेम सहलुमन्टस्तुयुचवस त्वऽयकघरिषिष स्तोऽरस्य॥

एभ्यस्तस्यारस्य इम् स्याद्वा। रोषिता रोष्टा एवं रिष हिंसायाम्। उस दाहे।

६०६। दरिद्राकासकायजागृघो-वाम व्यां॥

एभ्यश्चाम वा स्यात्, व्याम्। ५८२ भृसुक्र-न्वाम इति। श्रोषाम्बभूव उवोष। यय यत-गतौ। ययाय ययथतुः ययषिथ। मिहौ सेचने। ६०४ हसषोऽनिमीति सक् १७६ हो-ढामौ अमिचत्। ७७ ढोर्ढि घंखानुरिति। सेढा। दहौ भस्मीकरणे। २७४ दादेर्घः। १७५ भ्रमान्तस्येति दस्य धः॥ अधाचीत्। चह कल्कने। अचहीत्। ५७५ हान्तत्वान्न वि:। शुच शोके। शोचिता शोक्ता। ग्लेह-र्ष क्षये।

६०७। एचोऽशित्याः।

धोरेच आः स्यादशिति। ५८७ यमरमे नीमसनो। आग्लासीत॥

९०८। णवातोडौ।

आदन्तात् परो णप् डौः स्यात्। जग्लौ।

९०९। डस्येचोव्यणुराचि लोपः॥

डसि एचि इमि अणोरस्याचि धोरातो-लोपः स्यात्। जग्लतुः जग्लुः जग्लिथ जग्लाथ।

९१०। स्यादेङ्ःस्थोवाक्यःणौ॥

स्यादेरादन्तस्य स्थावर्जस्य ङः स्याद्वा क्यणौ। ग्लेयात् ग्लायात्। गै शब्दे।

९११। दामागैहाकापिवसोस्योऽरहसे त्वयपि ङीः॥

एषां क्यणौ ङः स्यात् अरहसेत्वणौ यप् वर्जऽङीः स्यात्। गेयात्। ष्टै संहतौ ध्वनौ। ष्टायति। ष्टैप शोधने। ५३३ पिलान्तदासंज्ञा। अदासीत् दायात्। धेट् पाने ट ई वर्धः।

९१२। ञिघ्रिसुद्रुकमोऽङ् घे क्यां घ्रिधेटध्वन्ये ल्यादूनेस्तु वा॥

ज्यन्तादिभ्यष्टरामङ् स्यात् घेऽर्थे घ्राधेख्रु वा। ५५७ सुहिंष्ठाऽङीति अदधत अधासीत।

६१३। घ्रेसाच्छासाह्वः से पे लुगु ॥

अघात्। पा पाने। ५८६ स्थादानेति पिब। पिबति ५५१ भूस्थापिबेति सेर्लुक् अपात् पेयात्। घ्रा गन्धोपादाने। जिघ्रति अघ्रात् अघ्रासीत्। ध्मा शब्दाग्निसंयोगयोः। धमति अधमासीत्। ष्ठा गतिनिवृत्तौ। तिष्ठति न्यष्ठात् नि तष्ठौ स्थेयात्। म्ना ऽभ्यासे। मनति। दाण दाने। प्रणियच्छति प्रण्यदात् देयात्। ह्वृ कौटिल्ये।

६१४। स्याद्यर्त्तेरनोर्य्यङ् यकृठी घ्यणौ स्कु स्तु ध्याम् ॥

स्यादेरर्त्तेश्चकारस्य गुणः स्याद्यङि यकि टीघ्योरणौ च स्कु स्तु ध्यामेव। जह्वरतुः।

६१५। नेड्वृतश्चपोऽह्वृस्कः।

इड्वस्तु वजोड्ढकारान्तात्पर इट् न स्यात्। जह्वर्थ।

६१६। स्यस्यड्ढ्नः ॥

ऋदन्तहन्तिभ्यां स्यस्य इट् स्यात्। हरि-

ष्यति । स्मृ ज शब्दोपतापयोः । ५७२ वेभूदि-
तीक्षा असारीत् अस्वार्षीत् सस्वारिथ सस्वर्थ ।
सृ गतौ ।

६१७ । वक्तायस्यख्यालिपसिचह्वोङ-
घेष्यां स्वक्त वा लिवृष्यान्तु से ॥

वक्तयादेर्घेऽर्थे ङः स्यात् ष्यां स्वक्तष्यान्तु वा
लिपादेस्तु से वा स्यात् ।

६१८ । दृश्योर्गुः ॥

दृशोर्ङे वर्णान्तस्य च गुः स्यात् ङे असरत्
असार्षीत् ।

६१९ । ऋद्विः भयक्लीपे ॥

स्त्रियात् । ऋगतौ । ऋच्छति आरत्
आर्षीत् आर आरतुः आरिथ अर्यात् । श्रु
श्रवणे ।

६२० । श्रोःशुर्धेरे जिश्च ।

श्रुवोर्धेऽर्थे शुः स्यात् रे श्रुवश्च जिः ।
शृणोति शृणुतः शृण्वन्ति ।

६२१ । नपोऽलस्योल्लोपोवृमि वा ॥

प्रत्यय नोकारस्य उकारस्य वा लोपः

स्यात् वमयोः परयोः। शश्रुवः शश्रुवः शश्रुमः शश्रुमः। ५४६ हेलौँपोऽस्येति शशु शुश्रुव। स्रु गतौ।

६२२। सुस्तुधोः सेरिम्मे।

असावीत सुषविथ सुषविव सविता सोता सुगतौ। २३२ णिश्रीत्यङ। असुसुवत् सुस्रोथ सुस्रुव। द्रु गतौ। अद्रावीत् अद्रौषीत् दुद्रुविव। द्रु गतौ। अदुद्रुवत् दुद्रुव। गम्लृ गतौ। गच्छति ५६५ लिदित्त्वात् ङः। अगमत् जगाम। २३१ हनगमेत्युङ्लोपः जग्मतुः जग्मुः जगमिथ जगन्थ।

६२३। गमोऽमे सट्टम् माह्नीत्तुवा॥

गमः परस्य सस्येम् स्यान्तु मे मयोग्यात्तु वा। गमिष्यति। सृप्लृ गतौ। असाप्सीत् असाप्सीत्। असृपत्। स्कन्दिरौ गतिशोषणयोः।

६२४। त्रिपक्क मानिव्विसुनिदुः स्वपः सः षोनिान व्विस्क रस्कुतपरि

विस्कन्दाऽप्राणिघनिपरिनिर्व्यभ्यनुस्य न्दस्तु वा ।

विस्कन्ननातेर्बवर्जव्यादिपूर्व्वस्य स्यन्दश्च सः षः स्यात् व्यादि पूर्व्वस्कन्दस्तुलोः परिविस्कान्दते-रप्राणिघन्यादिपूर्व्वस्य स्यन्दतेश्च स्याद्वा । परिष्कन्दति परिस्कन्दति । तॄ प्लवनतरणयोः ।

६२५ । ऋतोगुः कित्ङ्यां ॥

तेरतुः ।

६२६ । ॠ तोवेमोर्घोऽटीढीपस्मे: ॥

इङो इञो ऋदन्ताच्च इमोर्घः स्याद्वा नतु ण्वा ढ्याः परेश्च । तरीता तरिता । टीढीप-रेस्तु तेरिथ । तरिषीष्ट अतारिष्टाम् ॥

६२७ । ऋदिरणावृर्बोष्ठ्यात् ॥

ऋकार इर् स्यादणौ ओष्ठ्यात् परस्तु उर् तीर्य्यात् । षञ्जो ञि सङ्गे ।

६२८ । षञ्जदन्षस्वन्जोऽपि नलोपः ॥

निषजति न्याषाङ्क्षीत् निषषञ्ज मषजतुः

ससंस्कृतु: ॥ ह्वयिरौ प्रेक्षणे । पश्यति ॥६०३ अदर्शत वर्द्दोऽकिदिति । अद्राक्षीत् ॥ अदर्शत् ५८८ सृजदृशोर्झलीम्वा । ददर्शिथ दद्रष्ठ । दन्शौ दंशने । अदाङ्क्षीत् । कित निवासे रोगापनयने संशये च ।

६२६ । कित्तिजुपः सन्नेम् मान शानदानवधस्तु खेर्जौ च ।

किताद्देः सन् स्यात् इग् न स्यात् मानादेस्तु खेर्जौ च ॥ क्रमादेते ऽत्र सन्देहे चान्तिनिन्दाविचारणे । निशानार्जवनिन्दासु दग्जये ऽपि कितोमतः ।

६३० । सन्आदिर्धुः ।

सनन्तो आद्यन्तास्त धुसंज्ञः स्यात् ।

६३१ । सन्यङन्तो द्विः ॥

चिकित्सिति अचिकित्सीत् चिकित्सामास ।

इति पवत्पादः ॥

—

सवत् ।

एध ङ् वृद्धौ । एधते ऐधिष्ट एधाञ्चक्रे ।
दद ङ् दाने । ५७८ अशश्वददेर्लुक्नो: । ददडे ।
ष्वक्क ङ् सर्पणे । ५६८ अष्टैरष्वक्के त्युक्त: । ष्वक्कते
सष्वक्के । ऋज ङ आर्ज्जवे । आनृजे । तिज ङ
क्षमानिशानयो: । तितिक्षते । ष्वञ्जौ ङ्
सङ्गे । निष्वजते ।

६३२ । निविपरिस्वञ्जस्तुसमादे: स:
षोऽसि वा ॥

न्यष्वङ्क न्यस्वङ्क सस्वजे सस्वञ्जे ।

६३३ । सत् स्वञ्जोष्ठ्यां नाखे: ॥

खिवर्जस्यानयो: स: षोनस्यात्थाम् ।
निषस्वजे विषस्वञ्जे । त्रपूष ङ लज्जायां ।
अत्रपिष्ट अत्रप्त त्रेपे । जभङ् जम्भने ।

६३४ । नुण् जभोऽचि ॥

अजम्भिष्ट । टुभ ङ् स्तम्भे । बिष्टोभते

व्याष्टोभिष्ट । पण ङ् व्यवहारे स्तुतौ च

कमस्तद्वत्त्वायः पणायते ।

६३५ । सनः पने चौर्व्वायायात् ॥

पणायति अपणायिष्ट अपणिष्ट पणायाञ्चक्रे

पेणे ।

६३६ । विच्छास्तुतिपणौवाय: ॥

पणायते पणते । एवं पन ङीड् । कमु ङ्

कान्तौ । कामयते । ञरन्तत्वादङ् ।

६३७ । अरङ्गरङः स्वोऽनग्लोपि णास्वृ

दितः ॥

अनग्लोपिनः णासोर्ऋकारेतश्चान्यस्योङः

स्वः स्यात् ङः परेऽङि परे ।

६३८ । स्वेःसनृद्धौघोर्हसादेर्घस्व

ल्यनेकाचोऽस्वकलिहलेर्व्वा ॥

अनग्लोपिनः स्वेर्घौ स्वचरे परे सन्वत् कार्य्यं

स्यात् जरङिघोश्च स्वेर्हसादेर्धः स्यात् कलिवर्जि

वर्णस्य लेरनेकाचश्च सन्वद्वा स्यात् ।

६३९ । स्यस्येत् सनि ॥

खेरवर्णस्य इत् स्यात् सनि परे ।

६४० । ऐर्लोपोऽनाल्विण्वाय्यान्ते त्न्वामिम्णिति ।

आलु इष्णु आय्य अन्त इत्नु आम् इम् णित् एभ्योऽन्यत्र ऐर्लोपः स्यात् । अचीकमत अचकमत कामयाञ्चक्रे चकमे ।

६४१ । योर्लोपोहल्यऽघे ॥

अय ङ् । गतौ । आयिद्दं आयिध्वं आयिद्दं अयाञ्चक्रे : एवं दय ङ् । स्फायी ङ् वृद्धौ । अस्फायिष्ट ।

६४२ । इषस्तनूतोष्यः ॥

अस्फास्त । ओ प्यायी ङ् वृद्धौ ।

६४३ । पदस्तनोण् वेप्यायतये दीपपूरजनबुधस्तुत्रा ॥

पदो घे ऽघे इण् स्यात् तनि प्यायादेस्तु वा ।

६४४ । प्यायः पी यङ्क्योः ॥

अप्यायि,अप्यायिष्ट अप्यास्त ।

पिषे। ताय, ङ् सन्तानपालनयोर्गतौ च। अतारिष्ट। अल ङ् चलने। अथालिट्वं अअ-लिध्वं अथालिड्ढं। षेट्ङ् सेवने। परिषेवते न्यषेविष्ट विषिषेव प्रतिसेवते। काश ङ् दीप्तौ। काशामास चकाशे। एवं कासङ्। कुशब्दे ईह ङ् चेष्टायाम्। ऐहिढ्वं ऐहिध्वं ऐहिड्ढम्। रुङ वधेगत्याम्। अरविष्ट अरोष्ट रुरुविषे। देङ् पालने।

६४५। द्वेर्दङोर्दिगिळ्यां॥

ङित्कस्य देङो दिगिः स्यात् ब्याम्। दिग्ये षो डिङ् नभोगतौ। अडयिष्ट। गुपङ् गोपनकुत्सनयोः। जुगुप्सते। मान ङ् विचारे मीमांसते। बधङ् निन्दायाम्। विभत्सते। द्युत ङ् दीप्तौ। आसुलिह्यदिति ङः तेनैव-पम्॥ अद्युतत् अद्योतिष्ट।

६४६। द्युत्स्वाप्योः स्वेर्जिः॥

दिद्युते। वृतङ्वल्ल वर्त्तते।

६४७॥ वृद्भ्योनेम् पे स्यसनोर्वी त्वमे।

इतादेः स्यसनोरिम् न स्यात् पे मादन्यत्र तु वा । अतएव पम् । वर्त्स्यति । मे तु वर्त्तिष्यते । स्यन्दूङ् ब्लु स्रवणे । निष्यन्दते निस्यन्दते द्वतम् । निस्यन्दते इस्तीति प्राणिधत्वान्न षः । कृपूङ्ब् ल्ड कल्पने ।

६४८ । कृपः कॢपेऽकृपादौ ॥

कृपः स्थाने कॢपः स्यान्नतु कृपादौ । कल्पते ।

६४९ । नेम् पे ड्याः ॥

कृपो ड्या इम् न स्यात् पे । अतएव पं कल्प्ता । पे किं कल्पिता कल्प्ता कल्पिस्यति कल्पिष्यते कल्प्स्यते । व्यथष्म ङ पीड़ायाम् ।

६५० । व्यधग्रहज्यावयव्यधवश्चव्यचप्रच्छव्रश्च भ्रम्जस्वपवचयजादेः खेजि ङ्याम् ॥

एषां खेजिः स्यात् ङ्यां । विव्यथे ॥ त्रिस्वराप्मङ् स्वदे । अत्वरिट् अत्वरिष्टं अत्वरिषं ।

इति मवत् पादः ।

पत्लृ न गत्यैश्वर्ययोः ।

९५१ । वच्यस्यश्विपतां वोचस्थश्वपप्तार्ङे ॥

एषामेते क्रमात् स्युर्ङे । अपप्तत् । यत्न टु वम उद्गिरणे । वेमतुः ववमतुः वेमिथ ववमिथ । भ्रमु जस्तु चलने । ५८२ क्रमक्लमेति स्वन् वा भ्रन्यति भ्रमति भ्रेमतुः वभ्रमतुः । सस्जञ्च शक्तौ । व्यषहत व्यसहत । ९०१ येमसहेतीत्वा । परिषहिता ।

९५२ । सहवहोऽदोढि ॥

सहवहोरकार ओः स्यात् ढे परे । निसोढा । ५७१ ओत्वान्न षः । लौ षद्लृ विषादे गतौ । निषीदति न्यषदत् निषसाद प्रतेस्तु प्रतिसीदति । शदलृ शाले ।

९५३ । शदोऽपि स्म् ॥

शीयते अशदत् । फक्क मिण गतौ । फेणतुः पफणतुः फेणिथ पफणिथ । राजृ भ्राज दीप्तौ । रेजतुः रराजतुः रेजे रराजे । ५७८ त्रिधिव-

लादातोप्येत्वम् । एवं टुभ्राश्टङ् ण दीप्तौ । भ्राश्यते भ्राशते । भ्रेशे बभ्राशे । एवं टुभ्लाश्टङ् ण भासि । ष्वन ण शब्दे । विष्वनति अवष्वनति मांसं व्यष्वनत् विष्वेणतुः विषष्वणतः । विष्वणति वीणा निस्वनति अन्नम् । ५७१ अनव्यवेत्युक्तेर्नषः । खनु ञ विदारे । २२८ हनगमेत्यु ङ् लोपः चख्नतुः चख्ने ।

६५४ । खनसनजनां ङा झये येतु वा ॥

खायात् खन्यात् । चात् ङ निषः नेऽर्त्त्वे अखानीत् अखनीत् । ६४१ ख्योर्लोप इति जन ङस्य हायां । जायते जनते । गुह ञ संवरणे ।

६५५ ॥ गुहोणोरूः ॥

गुहोणोरूः स्यात् । गूहति गूहते अगूहीत् अघुक्षत ।

६५६ ॥ गुहदुहदिहलिहां टीं सदन्त्येन सिः सक् वा ॥

एषां ठोसदन्त्ये परे सिर्न स्यात् सक् च वा स्यात् । अगूढ अघुक्षत ।

## ६५७। सकोऽल्लोपोऽच्यस्रो॥

सकोऽकारस्य लोपः स्यादस्रे अचि परे। अगृहिषि अघुक्षि अघुक्षावहि अगुह्वहि। अस्रे दन्त्ये किं अगूहिष्महि अघुक्षामहि। अस्रे किं अगूहिषत अघुक्षन्त। ह्वृञ् हृत्याम्।

## ६५८। ह्वृगुङ्गुर्मढीश्यनिम्कित्गमस्तु वा॥

ह्वृगुङ्करवर्णान्तात्च परा मे स्थितानिम् ढी लिङ्च कित् स्यात् गमस्तु वा। अहृत अह्वषतां हृषीष्ट। टुडु भञ्ज अतिपुष्ण्योः। वभ्रव। दान ञ आर्जवे छिदि। दीदांसति दीदांसते। एवं शान ञ तेजे। शीशांसति। भजोञ भागसे-वयोः। भेजे भेजिथ वभक्थ। श्रि ञ सेवायाम्। ६२२जिश्रीत्यङ्। अशिश्रियत् श्रयिता। रञ्जो ञ रागे।

## ६५९। रञ्जोऽपपकानासमिनौ नलो-पोऽश्वोतु स्तगदमयो॥

रजति रजते ररञ्जतुः ररञ्जुः। त्विषौ ञ ...... ...... त्विषीष्ट। यजैञौ

देवार्चादानमङ्गकतौ। ६५० व्ययग्रहेति जिः। दूयाज।

६६०। ग्रहस्वपाद्योः अङिन्कितो-र्जिः॥

ग्रहादेः किति ङिति स्वपादेः किति जिः स्यात्। ईजतुः ईजुः इयजिथ इयष्ठ। डु वपी ञ मुण्डबीजोप्तयोः। प्रवप् वाप। वहौञ प्रापणे। प्रवप्यवाक्षीत् प्रवोढ उवाह ऊहे। वेञ स्यूतौ।

६६१ ध्यां न वेप्रच्छाम्॥

वेञप्रच्छिव्रश्चिभ्रस्जीनां जिर्न स्यात् ध्याम्। ववौ ववतुः।

६६२। वेञोवय वा।

वेञो वयः स्याद्वा ध्याम्। उवाय ऊयतुः।

६६३। यवः किति॥

वेञो यस्य वः स्याद्वा ध्यां किति। ऊव तुः। व्येञ वृतौ।

६६४। नाव्येञोऽस्य॥



व्येञ आ न स्यात् ध्याम्। विव्याय।

६६५ । जिं वान्तग्रः क्विति ।

ह्वेर्व्यैञोऽन्त्यो भागो जिं वा प्राप्नोति क्यां क्विति । विव्यतुः विव्ययतुः विव्ययिथ । ह्वे ञे स्पर्द्धायां शब्दे च । ग्रहुत् ग्रहुत ग्रह्वास्त

६६६ । ह्वोर्द्वेर्जिः ॥

ह्वेर्ह्वञो जिः स्यात् । जुहाव जुहुवतुः । ऐ वञौ निवासे ।

६६७ । सत्सरे ॥

सस्य त स्यादरे से परे । अवात्सीत् अवात्तां उवास ऊषतुः । वद वाचि । अवद्वदति । ५७३ व्रजवदेति ब्रिः । अवादीत् उवाद ऊदतुः ट्वाश्वि श्वीर्गतिवृद्ध्योः । श्वासुलि-दुग्रदिति ङः । अश्वत् । ६१२ जि श्रीत्यङ् वा अशिश्वियत् अश्वयीत् ।

६६८ । श्वे र्जिर्वायङ् क्योग्र ङ् सनोः॥

श्वेजिर्वा स्यात् यङि क्यां ञेः परे अङि सनि च । शु शाव शिश्वाय शुशुवतुः शिश्वियतुः श्वविता शूयात् ।

इतिमिस्रपादः ।



इतिषाद्यपादः

अदादिः।

अद्लौ भक्षणे।

६६९। लुगद्याऽपः॥

अदादेः परस्यापो लुक् स्यात्। अत्ति।

६७०। ङ्झसोर्हेर्धिः॥

होर्झसाञ्च परस्य हेर्धि स्यात्। अद्धि।

६७१। हसद्भ्यां दिसेर्लोपामौ॥

हसात् परयोर्दिस्योर्लोपः स्याददः परयोरम् स्यात्। आदत् आदः।

६७२। घस्लदः सनघ्यल् घञि॥

अदो घस्लृ स्यात् सनि घ्यामलि घञि च। २८५ लित्वात् ङः। अघसत्।

६७३। घ्यां वा॥

जघास आद। २३१ हनगमेत्युङ् लोपः। जक्षतुः आदतुः जघसिथ आदिथ। प्साल भक्षणे। प्रणिप्साति।

६७४। द्विषविदातोऽनुस् वा॥

द्विषो विदो दात्त्वाच परो न उस् स्याद्दा

अप्सुः अप्सान्। वस कान्तौ। वष्टि। अहस्य पाद्योरिति ञिः। उष्टः उशन्ति अवट उवाश। हनश्री हिंसागत्योः।

६७५। वनतनाद्यनिमां अम्लोपो-ऽसयप्यति क्यणौ॥

एषां अम्लोपः स्यादणौ ऽसे यपि च नतु तिङ्क्षि। अणिङ्गतः १६१ हनोङ्कोघ्न। घ्नन्ति अहस्व: अहन्व: अहण्म: अहन्म:।

६७६। जह्यौ धिग्धाधि हन्यस्तिशा-स्ति हिना॥

एषां हियुक्तानां क्रमादेते स्युः। जहि।

६७७। हनोवधष्ठीक्यलि टौमे तु वा॥

हनो वधः स्यात् क्यां क्यामलि च टौमे तु वा। अवधीत्।

६७८। खेर्ह्राघोञ्णिति च॥

खेः परस्य हनो हस्य घः स्यात् ञिति णिति च। जघान जघ्नतुः हन्ता वध्यात् अह-निष्यति। द्युलऽभिसर्पणे।

६७९। रपिद्ध्युतोऽर्दोर्वि:॥

अद्वैधौरुकारस्य त्रि स्यात् पिति हसे रे। द्यौति द्युतः द्युवन्ति। यु ल मिश्रणेऽमिश्रणे च। यौति यविता। णु ल स्तुतौ। अनावीत् अनौ-षीत् नुनुविव॥ क्ष्णु ल तेजने क्ष्णविता। ष्णु ल प्रस्नुयाम्। ५८५ स्नुक्रमोऽमेट्लीन। अस्नावीत्। इन ल गतौ।

६८०। यिनोऽच्यणौ॥

इनो यः स्यादणावचि। यन्ति।

६८१। गा व्याम्॥

इनो गा स्यात् व्याम्। अगात् इयाय।

६८२। खेः किति घः॥

इनः खेर्घः स्यात् किति व्याम्। ईयतुः॥

६८३। अगेर्वा॥

अगेरिनो घः स्यात् किति व्याम् ईयात्। अगेः किं अन्वियात्। अधीङ् ल स्मरणे।

६८४। इन्वदिक्॥

इन इव इकः कार्य्यं स्यात् रूपञ्च तद्वत्। या ल गतौ। प्रणियाति। एवं वा ल गमन-

ल ख्याती कथने। अख्यत्। मा ल च माने शब्दे। प्रणिमाति मेयात्। विद ल ज्ञाने।

६८५। वेत्तेः कीपं ठीपम्बा॥

विदः परस्याः क्याः पव्याःपं स्याद्वा। वेद विदतुःविदुः वेत्थ विदथुः विद वेद विद्व विद्म। पक्षे। सुगमम्।

६८६। ङाम्बाटग्रां व्यान्तु क्रनु॥

वेत्तेर्ग्यां ङाम्बा स्यात् व्यान्तु क्रञ एवानुप्रयोगः।

६८७। तनश्यःश्नुप्रेघे॥

विदाङ्करोतु वेत्तु।

६८८। क्ञोऽद्गणौ रे॥

क्ञोऽकार उः स्याद्गणौ रे। दिवाङ्कुरुतां वित्तां अविदुः अविदन्।

६८९। घ्यां सौ रवाद्धोः॥

दधोरेफः स्यात् वा सौ घराम्। अवेः अवेत् अवित्तं अवित्त विदाम्बभूव विदेद। अस ल भावे।

६९०। लोपोऽस्तत्रसोर्ङिद्गणोरप्यां॥

असेरकारस्य ङिति रे सस्य च बे लोपः स्यान्नतुधत्रां । स्तः सन्ति असि एधि आसीत् आस्ताम् ।

६६१ । भूरदे ॥

असेर्भूः स्यादरे । अभूत् ।

६६२ । प्रादुर्णाकः सः षोऽच्ये ॥

प्रादुःषन्ति प्रादुःष्यात् निषन्ति । मृज ूल य शुद्धौ ।

६६३ । मृजोऽकङिति ञिर्वोल्वच्यम्

अकङिति मृजो ञिः स्याद्गणावचि तु वा मार्ष्टि मृष्टः मार्जन्ति मृजन्ति वच्जौ वाचि । वचस्यख्यिपतामिति वोचः । अवोचत् उवाच ऊचतुः । रुदिर लघ रोदने ।

६६४ रुदाग्रोऽयोहसस्येम् ॥

रुदादेः परस्याय स्य हसस्य रस्य इम् स्यात् रोदिति रुदितः । अयः किं रुद्यात् ।

६६५ । दिस्योरम्वा ॥

रुदादेः परयोर्दिस्योरम् स्यात् वा । अरोदत् अरोदीत् अरोदः अरोदीः । ञि

ष्वपो ञ् स्वप्ने । विष्वपिति । २२८ सनत्वान्न षः । विसुष्वाप दुःषुषुपतुः । ६२४ निर्व्वत्वात् षः । श्वनघ्लु प्राणने । प्रोणिति प्रानिति । श्वसघ्लु प्राणने । श्वसिति अश्वसीत् ५७५ चणादित्वान्न त्रिः ॥ जच घ्लुभच्चहासयोः । जचिति ।

६६६ । अन्तोऽद्द्वेः ॥

द्वेः परस्मान्तोऽत् स्यात् । जचति । २८१ अनुस्मिद्वेः । अजचुः । जागृ घ्लु जागरणे ।

६६७ णुरुस्यऽब्याम् ॥

द्वेरसि परे णुः स्यात् न तु ब्याम् अजागरुः अजागः अजागरीत् जागरामास जजागार ।

६६८ । जाग्रोऽणव्वीणङिति कसुकाने तु वा ॥

जागर्त्तेणुः स्यान्नतु णपि वौ इणि ङिति च कसौ काने तु वा । जजागरतुः । दरिद्रा घ्लु दुर्गत्याम् ।

६६९ । दरिद्रोङिर्हस्वेऽणौ ह्याम् ब्यास्तु वा ॥

दरिद्रातेर्ङिः स्यात् अणौ हसे रे परे हा-म्ग्रोस्तु वा । दरिद्रितः ।

७०० आद्द्ग्रोरा लोप्यो णौ हमे-त्वद्रः ॥

आद्दत्यस्य द्रेस्त्रा लोप्यः स्याद्‌णौ हसे तु दावर्ज्जमी स्यात् । दरिद्रति ।

७०१ । दरिद्र्यालो पोऽसनकाने-ऽरे टग्रान्तु वा ॥

दरिद्र आलोपः स्यादरे नतु सनि अकि अने च ग्यान्तु वा । अदरिद्रीत् अदरिद्रासीत्दरिद्रा-मास ददरिद्र । ददरिद्रौ इति केचित् । दरि-द्रात् । चकास्र्चलु दीप्तौ । ६७० झभसोर्द्दिः । झषभसोरिति सस्य दः । चकाधि चकाद्धि ।

७०२ । ध्यां दौ त सः ॥

ध्यां दौ परे सस्य तः स्यात् । अचकात् ।

७०३ । सौ वा ॥

अचकात् अचकाः । शास चलु शासने ।

७०४ । शासुङिन्ह्सङ्ऽणौ क्वौत्वाशा-सस ॥

शास्तेरङ् इत् स्यादणौ ह्यवे ङे च कौ तु आशासस्व । शिष्टः शाधि अशिषत् । चच ङ्ल वद्दे ॥ चष्टे ।

७०५ । चक्षः क्शाञ्ख्याञरेऽत्यागो ममने ॥

चक्षः क्शाञ ख्याञ स्यादरे नतु वर्ज्जने ञसि असि अने च । अक्शासीत् अक्शास्त अख्यत अख्यत । त्यागेतु । समचक्षिष्ट ।

७०६ । ख्यावा ॥

चक्शे चख्ये चचक्षे । ईड़ङल स्तुतौ । ईट्टे ।

७०७ । सध्वोरस्य्मजनीडीशः ॥

एभ्यः परस्य सस्य ध्वस्य च रस्य इम् स्यात् । ईड़िषे । ईड़िध्वे । आस ङ्ल उपवेशने । आस्ते । ५८१ ञ्जिजागृदीयाम । आसाञ्चक्रे । वस ङ्ल स्तृतौ । वसिता वस्ता । निसि ङ्ल चुम्बने । प्रणिंस्ते प्रनिंस्ते । सू ङ्ल प्रसवे । सूते ।

७०८ । सूतेर्न आम्याम् ॥

सुवे । ३६३ वेमह्दितोत्ता । असविष्ट । शी ङल शयने ॥

७०९ । शीङो रेसुः ॥

शेते शयाते ॥

७१० । मान्तोरम् विदस्तु वा ॥

शीङः परस्य मस्यान्तोरम् स्यात् वेत्तेस्तु वा । शेरते अशयिष्ट । अधीङ्‌ल अध्ययने अधीते ॥

७११ गीङ्ष्टीष्योर्व्वा ॥

इङो गीः स्यात् वा टीष्योः परयोः वत्वान्न णुः । अध्यगीष्ट अध्यैष्ट ।

७१२ क्यां गा ञेरङसनोस्तु वा ॥

इङो गा स्यात् क्यां ञेः परे अङि सनि च वा । अधिजगे अध्यगीष्यत अध्यैष्यत ॥ दीधीङ् ञ्‌ल देवने दीधौ ॥

७१३ । दीधीवेव्योर्न गुः ॥

दीध्यै ॥

७१४ लोप्योऽन्तोय्योः ॥

दीधीवेव्योरन्तोलोप्यः स्यात् यकारे वर्णयोः । अदीधिष्ट ॥ एवं वेवीङ् ञ्‌लु ईलवत् ॥ द्विषौ ञ्‌ल वैरे ॥ विषविदातोऽसुस् वा ॥ अद्विषुः अद्विषन अद्विट् अद्विड् ...

दुहौञ ल दोहने । अधुचत् अधुचत अदुग्ध । एवं दि ही ञ । प्रणिदेग्धि अधिचत् । ऊर्णुञ् ल आच्छादने ॥

७१५ । वोर्णोः पिद्वस्बे णुः ॥

ऊर्णोर्णुः स्यात् पिति द्वस्वे रे । ऊर्णोति ऊर्णौति । रपिद्वस्युत इति ब्रिः ॥

७१६ । घ्याम् ॥

ऊर्णोर्णुः स्यात् पिति द्वचे घञां । और्णोत् ।

७१७ । णूव्ब्रिष्याम् ॥

ऊर्णोर्णुः उव् ब्रिः एते स्युष्यां । और्णवीत् और्णुवीत् और्णावीत् ॥

७१८ । नाजन्तादेरादिद्विः ॥

अन्ता दिस्थिताचोधोरादिद्विर्न स्यात् ॥

७१९ । स्मादौ नवद्रोऽये ॥

स्मादो स्थिता नवदरा द्विर्न स्युर्नतुये ऊस्तुवाव ।

७२० । ङिदिम्वोर्णोः ॥

ऊर्णोः पर इम ङित् स्याद्वा । ऊर्णुविता ऊर्णविता दुञ्ल स्तुतौ ॥

७२१। पिद्धस्तस्येम् ब्रुवोयङ्लुगृ-तुस्तोस्तु वा॥

ब्रुवः परस्य पित हसो रस्य ईम् स्यात् यङ् लुगादेस्तु वा। स्तवीति स्तौति अभिष्टौति न्यष्टावीत् न्यस्तावीत् अस्तोष्ट तुष्टुव स्तविता स्तोता। टु चु ल चुते। चविता। रु ल ध्वनौ। रवीति रौति रविता रोता। तु ल् वृत्ति हिंसापूर्त्तिषु। तवीति तौति तविता तोता ब्रू ञल उक्तौ। ब्रवीति॥

७२२। पश्चतिप्पञ्चणव्वाहश्च॥

ब्रुवः परेषां पञ्चानां तिवादीनां पञ्च णवादयो वा स्युः ब्रुवश्चाहः स्यात्। आह आहतुः आहुः॥

७२३। हस्थि॥

आहो हस्य तः स्यात् थे परे। आत्थः आहथुः। पचे सुगमं॥

७२४। वचोऽरे॥

ब्रुवो वचः स्यादरे। अवोचत उवाच ऊचे।

ह्वादिः।

ऊर्लि होमेऽदने।

७२५। ह्वादौरेद्विः॥

ह्वादिर्द्विः स्याद्रे परे। जुहोति॥

७२६। ह्वोवऽच्यणौ॥

ह्वोरकारस्य वः स्यात् अणावचि परे। जुह्वति जुहुधि॥

७२७। पश्चाम्बा भीह्रीभृहोभ्यां॥

एभ्यः पश्चाम्बा स्यात् भ्यां। जुहवामास जुहाव। ञि भीलि भीत्यां। बिभेति॥ दरिद्रो- ङिरिति। बिभितः बिभीतः बिभ्यति बिभया- मास बिभाय। ह्री लि लज्जायां। जिह्रयामास जिह्राय। पृ लि पूर्त्तौ॥

७२८। पृभ्मादेर्ङिः खेरे॥

पृऋ भृ माङ हाङां खेर्ङिः स्याद्रे। पिपर्त्ति

७२९। पुर्घावा॥

पिपूर्त्तः पिपृतः पपरतुः पप्रतुः। पुमत्वान्न रः। ओ हाक लि त्यागे। जहाति जहितः

जहीतः जहति

७३० । हाकोऽन्तलोपः य्यां ॥

जह्यात् ॥

७३१ । हौ ङा वा ॥

हाको ङा स्याद्वा हौ । जहाहि जहिहि जहीहि हेयात् । ऋ लि गत्यां । इयर्त्ति । जन म लि ङ जनौ । जज्ञिवे जज्ञिध्वे । निजिरो ङ लि पोषणे ॥

७३२ । निजां खेरेणु: ॥

निजविजविषां खेणुः स्याद्रे । नेनेक्ति नेनिक्तः ॥

७३३ । नद्वर ङोऽचि ॥

द्वेरङो गुर्न स्यादचि परे । नेनिजानि एवं विजिरो ञ लि विवेके । विषिर्लि ञौ व्याप्तौ अविषत् अविचत् । डु दाञ लि दाने । प्रणि-ददाति । अददत्युक्तेरा लापः । दत्ते ।

७३४ द्वगोदाधोर्देधेहौ ॥

द्वेर्दाञो द्वैधाञोदे धेश्च स्यात् हौ । देहि ।

७३५ । ख्यादोर्ङिष्टीमे न गुः ॥

ख्यादोर्ङिः स्यात् टीमि तस्य च न गुः ।

अदित अदिषातां। डु धाञ् लि धारणे। प्रणि-
दधाति॥

७३६। धोद्धोऽन्तलोपे त्थि॥

धाञोदस्य धः स्यात् तथयोः परयोः अन्त-
लोपे सति। धत्ते धेहि अधित। टु डु भृञ्
लि भृतिपुष्ट्योः। बिभृतः बिभ्रति बिभरामास
बभार। मा ङ् लि शब्दे। प्रणिमिमीते मिमाते
मिमते। एवं ओ हाङ लि गतौ॥

इत्यदादिपादः।

---

दिव्यु क्रीड़ायाम्।

७३७। दिवसुतुदरुधक्रयादेर्यनन्व-
नश्नाः शिद्दे रे॥

एभ्यो धे ऽर्थे यन् नु श नम् ना एते रे
परे क्रमात् स्युस्ते च शितः। दीव्यति। षिव्यु
तन्तुसन्तते। निषीव्यति व्यषेवीत्। न्यषवीत्
नृती य नर्त्तने॥

७३८। न्टतक्षत्चृतछृतृदोऽरसा-
ऽमासिक्ये॥

एभ्यः परस्यारस्य सिवर्जस्य सस्य इम स्याद्वा नर्त्तिष्यति नर्त्स्यति । सौतु अनर्त्तीत् । त्रसी य भये । क्रम क्लमेति श्यन् वा । त्रस्यति त्रसति तत्रास त्रेसतुः तत्रसतुः । जॄ इषॅ जरायां । जीर्य्यति अजरत् अजारीत् जेरतुः जजरतुः जरीता । जरिता शोय निशाने ॥

## ७३८ । यन्योश्शमादिमिदोलोपश्च-शुः ॥

ओकारस्य लोपः शमादेर्घा मिदेशु :स्यात् यनि । श्यति अशात् अशासीत् । एवं छो य लूनौ । षो य नाशे । प्रणिष्यति न्यषात् न्यषासीत् सेयात् । दो य छेदने । प्रणिदात् देयात् । राध्यौ ण हिंसे । रेधतुः रराधतुः । वधार्थः किं आरराधतुः । व्यध्यौ ताड़े । विध्यति विव्याध विविधतुः । पुष्यौ ल्ह पोषणे शासुलिद्दुरत् इति ङः । अपुषत् । श्लिष्यो ञि ल्ह श्लेषे । अश्लिषत् ! आलिङ्गने तु आश्लिक्षत् । रध्यू ल्ह पाकहिंसयोः ।

## ७४० । नुम् रधोमन्त्रां नशमस्जोर-

भलभोऽनठीमचोभक्षस्वरव्यचि ॥

रधष्ठीवर्जेभ्यश्चऽचि सुचादिरये नशमस् जोर्भसे रभ लभोरठीवर्जेऽचि गुन् स्यात्। अरन्धत् रधिता रद्धा। ध्यान्तु रन्ध्वित रन्धिम् रेध्व रेध्म। तृप्यू ञ्लि प्रीणने। अतपीत् अताप्सीत् अताप्सीत् अतृपत्। एवं दृप्यू दृज्ञि हर्षाहङ्कारयोः। मुह्यञिल्ट वैचित्ये। मोहिता। मुहांघङिति। मोग्धा मोढा। नशल्ट पू नाशे।

७४१। नश नेश वा ङे ॥

प्राणेशत् प्राणशत् नशिता प्रनंष्धा प्रनंष्टा अशान्तत्वान्न णः। शमुथ्यद्र उपशमे। प्रणि शाम्यति। क्लिम्यू ञिभिर् ग्लानौ। क्लामत्रति क्लामति। असुद्र क्षेपे। आस्यत्। यसु दूर्यत्ने यस्यति यसति संयस्यति संयसति। अन्यत्र प्रयस्यति। लुभ्य दूर्गार्ध्ये। लोभिता लोब्धा। ञी मिंदा स्नेहे। मेद्यति। ष्णुङ्गा स्नुतौ। असविष्ट असोष्ठ। ओ दी ङ्य चये।

७४२। दोङ्भ्यां यन्यव्णौङा संनिवु वा ॥

दीङ्भ्यां यन् यपि णौ च ङा सनि तु वा स्यात् । अदास्त दिदीये । जनीय्य ङ् प्रादुर्भावे । जायते ।

७४३। जनवधःसेममोऽकमवमाचमो ञ्णत्कृदिणि स्वोऽमयमविश्रमस्तु वा ॥

जनो वधः सेमोऽमन्तस्य च कमवमाचमवर्जस्य स्वः स्यात् ञ्णिति कृति इणि च अमयमविश्रमस्तु वा । अजनि अजनिष्ट जज्ञे । दी पीङ्य दीपने । अदीपि अदीपिष्ट । एवं पुरीङ्य प्यायने । पद्यौ ङ गतौ । पदस्तनीण् घे इति । अपादि अपत्सातां । वुध्यौङ अवगमने । अबोधि अबुद्ध । नह्यौ ञ्य बन्धे । नहोधङ्भौ । अनात्सीत् अनद्ध ॥

इति दिवादि पादः ।

---

स्वादिः ।

षु ञ्न वन्धे । सुनोति अभिषुणोति सुनुतः सुन्वन्ति व्यषावीत् । सुसुधारितोम् । असविष्ट

असीष्ट सुषुविव विसविष्यति विसोष्यति। स्वान्तः त्वान्तषः। ड् मि ञ् न प्रक्षेपणे॥

७४४। मिग्योर्यङ्गौङाऽखलति लि-यस्तु वा॥

अमासीत् प्रत्ययमास्त।। चि ञ् न चित्यां॥

७४५। चेःकिर्वासनत्योः॥

चिकाय चिचाय चिक्ये चिच्ये। स्तृ ञ् न स्तृतौ।

७४६। स्याद्वृद्वृरस्कुंर्वेम्सन्म-ढीसेः॥

स्कात्र्जं स्याद् दन्ताद्दन्ताच्च दृञो दृङश्च सनो मे स्थितयोर्टो स्योश्च दृम् स्याद्वा। अस्त-रिष्ट अस्तृत स्तरिषीष्ट स्तृषीष्ट। दृञ् न दृतौ। अवारीत् अवरीष्ट। धूञ् न कम्पने। अधावीत् सुस्तुधोरितिम। हि न वर्द्धने गतौ। प्रहिणोति

७४७। हेः खेरनङि घिः॥

खेः परस्य हे र्घिः स्यान्नतु अङि। जिघाय क्षवि न क्षतौ हिंसे।



७४८। क्षाविविभ्यो ईर्वीमौ॥

क्षणोति अक्षणीत् अतएवेदितो नुण चक्षणव क्षणिवत। क्षण्यात्। दन्भु न दन्भे। देभतुः ददम्भतुः।

७४९ श्रन्थग्रन्थदम्भां थपि नलोपो वा॥

एषां थपि न लोपः स्याद्वा। देभिथ ददम्भिथ। धिवि न प्रीतौ। धिनोति। अशू ङ न व्याप्तौ। स्रान्तादिति खेरान्। आनशे।

इति स्वादिपादः।

तुदादिः।

तुदौ ञ श व्यथे। तुदति तुदते। भ्रस्जौ ञ श पाके। भृज्जति अभ्राक्षीत्।

७५०। भ्रस्जोऽरे णौ भर्ज्ज वा॥

बभर्ज बभ्रज्ज बभर्जे बभ्रज्जे। मुच्लृ ञ शप मोक्षे। गुनरध इति नुण् मुञ्चति अमुचत् अमुक्त। जिलिपौ ञ शप लेपने। अलिपत् अलिपत अलिप्त। षिचौ ञ शप उक्षणे। निषिञ्चति न्यषिचत् न्यषिचत न्यषिक्त निषिषेच। कृती शप छिदि स्ततृक्षादितिबा। कर्त्तिष्यति

कर्तृस्यंति घु घ क्षेपे । विधुवति व्यधाहीवत् ब्रश्च छेदे। इश्चिति अव्रश्चीत् अव्राचीत् ववश्च वव्रश्चतुः ॥ ऋच्छ गमनमोहकाठिन्येषु ।

**७५१ । ऋच्छत्यृतां ॥**

आनर्च्छ । कृ विक्षेपे । ऋदिरणावितो र। किरति चकरतुः करीता करिता ।

**७५२ । प्रत्युपोपात् क्ः सुम् हिंसाछेदे ॥**

प्रत्युपाङ्भिं सायां उपाच्छेदे किरतेः सुम् स्यात् । प्रति स्किरति उपस्किरति । टन् पश प्रीणने ॥

**७५३ टनर्पा नलुगा शणौ ॥**

टन् पतुन् पटन् फतुन् फरिन् फगुन् फहन् भउन् भघुन् भां नकारस्य लुग्वा स्यात शे ऽणौ च । टपति टम्पति । चृती श हिंसायां । चर्तिष्यति चत्र्स्यति ॥ प्रच्छौ श ज्ञीप्से । पृच्छति अप्राचीत् पप्रच्छ। सृजौ श विसर्गे । अस्राचीत् ससर्जिथ सस्रष्ठ । टुमस्जो श स्नाने । मज्जति अमांक्षीत् । मृशौ श स्पर्शे । अम्राक्षीत् अमार्क्षीत् अमृक्षत । [illegible]

विच्छायति विच्छति अविच्छायीत् अविच्छीत् मृशौ घ स्पृशि । अम्राक्षीत् अमार्क्षीत् अमृक्षत् । इष घ वाञ्छायां इच्छति वेमसहेतिस्ता एषिता एष्टा । कुट घि कौटिल्ये ॥

७५३ कुटां णमी ञ्णिति ॥

कुटादेर्गुणवृद्धी न स्यात् ञ्णिति नान्यत्र । अकुटीत् चुकोट । व्यच घि व्याजे । विचति विव्याच विविचतुः ।

७५४ । व्यचोऽजिरञ्णिदसि ॥

विचिता । त्रुट घि छेदने । त्रुट्यति त्रुटति । स्फुर घि स्फूर्त्तौ । निष्फुरति निस्फुरति एवं स्फुल घि स्फूर्त्ति चलनयोः । नू घि स्तवने । अनुवीत् नुनाव । मृ ङ घ मृतौ ।

७५५ मृङष्टोऽद्यमं ॥

द्यां द्यामत्ये च मृङोमं स्यात् । मृद्रिः प्रयक् दीपे । म्रियते अमृत मृषीष्ट । एषु किं ममार मरिष्यति । ओ विजी ङ घ भीकम्पे ।

७५६ । विजेर्गुर्नमि ॥

विजितुर्न स्यात् इमि । अविजिष्ट ।

इति तदादि पादः ।

रुधादिः ।

रुधिरौ धञि आवरणे । रुणद्धि ।

७५७ । नशोन्तेऽणौ ॥

नशो नकारः स्यादणौ रे । रुन्धः रुन्धन्ति अरुणः अरुणत् अरुधत् अरौत्सीत् । छृदुञ्ध । छर्द्दिष्यति छर्त्स्यति । एवं टृदिरोञुध नादरे । टह्ल धहिंसे ।

७५८ । टह इन् पिहसे ॥

टहो नण् इन् स्यात् पिति हसे रे । टणेढि टण्टः टं हन्ति अतर्हीत् अटघत् । हिसि धकि हिंसे ।

७५९ । नशोन लोप्यः ।

हिनस्ति । अनञ्जू ध ञी व्यक्तिगतिम्नक्षणे । अनक्ति ॥

७६० । अञ्जः सेरिम्पे ॥

अञ्जः परस्य से रिम स्यात् पे । आञ्जीत् आनञ्ज । ञि इन्धी ध ङ दीप्तौ । इन्धाञ्चक्रे ।

इति रुधादिपादः ।

तनादिः।

तनु ञ ढ विस्तृतौ। तनोति तनुतः तन्वः तनुवः तन्मः तनुमः।

७६१। सेलुक् तथासोस्तन् थ्योऽकुर्व्वौ॥

उवर्ण्णान्ततनादेः सेलुक् स्याद्वा तथासोः परयोः। अतत अतनिष्ट अतथाः अतनिष्ठाः। षनु ञ ढ दाने। सनोति असात असनिष्ट असाथाः असनिष्ठाः सायात् सन्यात्। क्षणुय ढ वधे। अक्षणीत्। क्षिणु ञ ढ हिंसायाम्।

७६२ नोप्युङोणुर्वोत्वृतः॥

क्षिणोति। ऋणु ञ ढ गतौ। ऋणोति अर्णोति। डु कृ ञ ढ करणे। करोति॥

७६३। कुरुव्लोपोवय्ये॥

कुर्व्वः कुर्म्मः कुर्य्यात् चकृव।

७६४। संपरेः सुमुपात्तु भूषासंघप्रतियत्नविकृताध्याहारे॥

आभ्यां कृञः सुम् स्यात् उपात्तु भूषादावर्थे।

संस्करोति समस्कृषातां सञ्चस्करिथ सञ्चस्करिव संस्क्रियात् संस्कृषीष्ट परिष्करोति पर्य्यस्कार्षीत् उपस्करोति ।

७६५ । हस्तेपाणौप्राध्वंजीविकोपनिषदोव्यस्य कृञि सस्तिरोमध्येपदेनिवचनेमनस्युरस्युपाजेऽन्वाजे साचादादेस्तु वा ॥

हस्तेकरोति तिरस्करोति करोतितिरः ।

इति तनादिपादः ।

---

क्र्यादिः ।

डु क्री ञ ग द्रव्यविपर्य्यये । क्रीणाति । श्राद्योरिति । क्रीणन्ति। स्कुञ गन उद्दृतौ ।

७६६ । स्कुस्कन्भुस्कम्भूस्तन्भुभ्यः श्नुश्नौघे रे ॥

एभ्यो घेऽर्थे श्नुः श्ना च स्यात् रे परे । स्कुनोति स्कुनाति विष्कभ्नोति विष्कभ्नाति। विस्कभ्नोति षः । एवं विस्कुभ्नाति विस्कुभ्नोति

विष्टभ्नोति व्यष्टभत् व्यष्टम्भीत् वितष्टम्भ स्तुभ्नोति स्तुभ्नाति । मी ञ ग वधे । मिम्योरिति ङा । अमासीत् अमास्त । पू ञ गि शोधने ।

७६७ । पूादेः स्वोने व्रादेस्तु वा ॥

पूादीनां स्वः स्यात् नात्ये परे व्रादेस्तु वा । पुनाति । कृ ञ गि हिंसे । अकरीष्ट अकरिष्ट अकीर्ष्ट करिषीष्ट कीर्षीष्ट । धू ञ् गि कम्पे । धुनाति अधावीत् अधौषीत् । ग्रह ञ गादाने । गृह्णाति ।

७६८ । हसान्नानोहौ ॥

हसात् परो ना आनः स्यात् हौ परे । गृहाण अग्रहीत् जग्राह जगृहतुः जग्रहिथ ।

७६९ । ग्रहेरिमोवाऽक्यां ॥

ग्रहेः परस्य इमो वः स्यान्नतु क्यां । ग्रहीता । शृञगि हिंसे ।

७७० । शपृदॄां स्वोवा कित् क्यां ॥

एषां स्वः स्यात् किति क्यां वा । शश्रतुः शशरतुः । एवं ञि पॄ गि पालने । दॄ गि विदारे ज्या गि जरायाम् । जिनाति जिज्यौ । व्री गि

हत्यां। ब्रिणाति व्रीणाति। ज्ञा ग बोधे। जानाति। श्रन्थ ग मोचे। श्रथ्नाति श्रेथतुः शश्रन्थतुः श्रेथिथ शश्रन्थिथ। एवं ग्रन्थ ग दर्भे। कुष ग निष्कोषे। वेमूदितीण्वा। निरकोषीत् निरकुक्षत्। अश ग भोजने। अशिता अष्टा। वृङ् ग वरणे। अवरीष्ट अवरिष्ट अवृत वृषीष्ट वरिषीष्ट वृषीष्ट।

क्रयादिपादः।

---

चुरादिः।

चुरञ्ञि स्तेये।

७७१। चुरादेर्ञिर्वा॥

चुरादेर्ञिः स्याद्वा स्वार्थे। चोरयति चोरयते अचूचुरत् चोरयामास चोर्य्यात् इत्यादि। पक्षे चोरति इत्यादि। कृतक सं शब्दे।

७७२। कीर्त्तः कृतः॥

कृतः कीर्त्तः स्यात् ञौ। कीर्त्तयति। गणत् क संख्याने।

७७३। [illegible]॥

हसात् परयोरकारयकारयोर्लोपः स्याद्दृश्यिति। गणवति।

७७४। वेङ्गणकथः खेअर्ङि॥

गणकथयोः खेरीङ् स्याद्वा अर्ङि। अजीगणत् अजगणत। अल्लोपित्वान्न ह्रः। कथत् का वाक्यप्रबन्धे। अचीकथत् अचकथत्।

इति चुरादिपादः।

---

अन्तः।

७७५। ञिः प्रेरणे॥

धोर्ञिः स्यात् प्रेरणेऽर्थे। कुर्व्वन्तं प्रेरयति कारयति। अचीकरत्। अशशासत् अडुढौकत् अशूशवत् अशिश्वयत् व्यतस्तम्भत् पर्य्यसीसिवत् व्यसीसहत्। साङ्त्वान्न षः। अचीचकासत् अचचकासत् औन्दिदत् औञ्जिजत् आडिडत् आर्च्चिचत् अररम्भत् अललम्भत् अजीहयत्। अनडीत्वात्कोर्न घिः। अदिध्वनत् अध्वनयीत् ऐलिलत् ऐलयीत् आर्हिहत् आर्हयीत् औनिनत् औनयीत्।

७७६ । स्मृदत्वरप्रथम्रदस्तृस्पशोऽङ् खेऽग्र्ङि चेष्टवेष्टोस्तु वा ॥

एषां खेऽङ् स्यात् अग्र्ङि चेष्टवेष्टोस्तु वा असस्मरत् अददरत् अतत्वरत् अपप्रथत् अम-म्रदत् अतस्तरत् अपस्पशत् अचचेष्टत् अचिचे-ष्टत् अववेष्टत् अविवेष्टत् ।

७७७ । भ्राजभासभाषदीपजीवमीलपीडो ऽकण्यणरणभणश्रणह्वेलपलुपलुठहेठां बोऽङः स्वः ॥

एषामुङः स्वः स्यात् वा अग्र्ङि । अबिभ्र-जत् अबभ्राजत् ।

७७८ । वर्द्धङोधुः ॥

ऋदुङो धोधुरेव स्याद्वा अग्र्ङि । अवीव-तत् अववर्त्तत् ।

७७९ । स्वपोजिः ॥

स्वपो जिः स्यात् अग्र्ङि । असूषुपत् ।

७८० । घ्राच्छासाह्वाव्येपां जौ वन् ॥

एषां ञौ परे यन् स्यात्। शाययति पाययति।

७८१। द्वेः पिबः पीप्योऽत्रङि॥

अपीप्यत्।

७८२। ह्रव्लीरीक्नू य्यृ ह्मायातां पनगुस्त्वञो॥

ह्रेपयति व्लेपयति रेपयति क्नोपयति अर्पयति ह्मापयति स्थापयति।

७८३। स्थोङोऽत्रङोः॥

तिष्ठतेरङ् इत् स्यात् अत्रङि। अतिष्ठिपत्

७८४। घ्रोवा॥

अजिघ्रिपत् अजिघ्रपत्।

७८५। पातिस्फायोर्लनवङौ ञौ॥

पालयति स्फावयति।

७८६। प्रीधूञोर्नन् वा॥

प्रीणयति प्राययति धूनयति धावयति।

७८७। रुहः पङ्वा॥

रोपयति रोहयति।

७८८ शदोगतौ तङ॥

घातयति । गतौ तु गाः घादयति गोपः ।

७८९ लाल्योर्ल्लनन्नौ स्नेहद्रवे वा॥

लातेर्लंन लियो नन् स्यात् स्नेहद्रवेऽर्थे ञौ वा । विलालयति विलापयति विलीनयति लियोरिति ङा वा । विलापयति विलाययति घृतम् स्नेहद्रवे किं लौहं विलाययति विलापयति ।

७९० वीजन धूतौ ।

वातेर्जन स्यात् कम्पने ञौ । वाजयति । धूतौ किं केशान वापयति ।

७९१ । क्रीजीङोऽजार्चिस्फुरप्रजनर्थ्वीनान्त वा ॥

एषामव आ स्यात् ञौ चाद्देस्तु वा । क्रापयति जापयति अध्यापयति अध्यजीगपत् अध्यापपित् चापयति चाययति चपयति चययति । मित्वात् ह्रस्व इति प्रक्रियारत्ने हष्टं। स्फारयति स्फोरयति वापयति वाययति । गाः पुरवातोगर्भं ग्राहयति इत्यर्थः ।



७९२ सिध्यार्थात् षौ सञ्ज ॥

अनयोरच आ स्यात् घात् भ्रयें जौ मश्च। विस्मापयते भापयते मुण्डः । घात् किं कुञ्चिकयैनं विस्माययति भाययति ।

७६३ भीर्भीष् वा ॥

भियो घभये भीष् स्यात् वा जौ मश्च । भीषयते मुण्डः ।

७६४ दुषेरोदूः ॥

दुषेरोकार ऊः स्यात् जौ । दूषयति ।

७६५ । चित्तविकारे वा॥

दूषयति दोषयति चित्तम् ।

७६६ । घटादिजनीजषक्रसरजामममारतोषनिशाननिशामार्थचन्नां स्वोऽकमामचमोऽज्ञोन्नमोऽस्तु घंश्च जाग्रुश्च ॥

घटाद्यादेरमन्तस्य मारार्थचन्नश्च जौ स्वः स्यात् नतु कमामचमां जेः परयोरिस्त्रमोस्तु घंश्च जाग्रुश्च स्वो घः । घटयति व्यथयति प्रथयति जनयति जरयति क्रसयति रञ्जयति स्व-

गान् रमयति ज्ञपयति । कमादेस्तु । कामयति आमयति चामयति ।

७९७ । ज्वलह्वलह्मलग्लास्नावनरम नमोऽन्यतरस्याम् ।

एषामगीनां स्वः स्याद्वा ञौ । ज्वलयति ज्वालयति ग्लपयति ग्लापयति । अगेः किं प्रज्वलयति प्रग्लापयति ।

७९८ । वा शमयमफणगिर्खदां ॥

एषां स्वः स्याद्वा ञौ । शमयति शामयति यमयति यामयति फनयति फानयति परिष्खदयति परिष्खादयति ।

७९९ । हनस्तङ्ऽणिचिणि ञ्णिति ॥

ञिति णिति च परे हन्ते स्तङ् स्यात् न तु णपि इणि च । घातयति ।

८०० । यिः सन् वे ष्योर्द्विः ॥

ईर्ष्योर्द्विः स्याद्वा । ऐर्ष्यियत् ।

इति ञ्यन्तपादः ।

---

सनन्तः ।

## ८०१ । सन्निच्छायां ॥

धोः परः सन् स्यादिच्छार्थे । पक्तुमिच्छति जिघत्सति दिदासते दिदीषते दिद्योतिषते उ-चिच्छिषति अधिजिगापयिषति अध्यापिपयिषति शुशावयिषति शिश्वाययिषति जुहावयिषति ।

## ८०२ । गुर्नानिमि ॥

अनिमि सनि गुर्न स्यात् । विवृत्सति विव-र्त्तिषते निनृत्सति निनर्त्तिषति तितरीषति तितारिषति तितीर्षति ।

## ८०३ । धेऽज्झनिङ्गमां ॥

अजन्तस्य हन्ते रिङः स्थाने जातस्य गमश्च घः स्यात् सनि । दुधूर्षति विवरीषते विवरि-षते वुवूर्षते सञ्चिस्कीर्षति जिगीषति चिकी-षति चिचीषति जिघांसति ।

## ८०४ । गमीनिङोः ॥

इनिङोः स्थाने गमिः स्यात् सनि । जिग-मिषति अधिजिगांसते ।

## ८०५ । नेड्वशि कृति ग्रहगुहोः ॥

उवर्णान्तात् गुहो ग्रहश्च सन इट् न स्यात् जुहूषति बुभूषति जुघुक्षति ।

## ८०६ । ग्रहस्वपप्रच्छां जिः ॥

एषां जिः स्यात्सनि । जिघृक्षति सुषुप्सति ।

## ८०७ । स्मिङ्पूङ्रञ्ज्वशूकिरगिरदृङ्धृङ्प्रच्छ इट् ॥

एभ्यः परस्य सन इट् स्यात् । सिस्मयिषते पिपविषते अरिरिषति अञ्जिजिषति अशिशि-षति चिकरिषति पिपृच्छिषति ।

## ८०८ । भ्रस्जश्रिस्वृयूर्णुभरदरि-द्रासनतनपतज्ञपर्द्धिदम्भिवो वा ॥

एभ्यः सन इट् स्याद्वा । बिभर्जिषति बिभ्र-ज्जिषति बिभ्रक्षति शिश्रयिषति शिश्रीषति सिस्वरिषति सुस्वूर्षति यियविषति युयूषति ऊ-र्णुनुविषति ऊर्णुनविषति ऊर्णुनूषति बिभरि-षति बुभूर्षति दिदरिद्रिषति दिदरिद्रासति

सिसनिषति सिसासति तितनिषति तितंसति तितांसति इत्येके । पिपतिषति ।

८०९ । मिमीमादार भलभशकपतपदहिंसार्थंरा धोऽचोऽनिमसतीस् खिलोपश्च ॥

एषामच इस् स्यात् खिलोपश्चानिमि सनि । स्यादेः सो लोपः । पित्सति जिघ्नपयिषति ।

८१० । आपधीपामीर्य्यः ॥

एषामच ई ईर ईप्ते क्रमात् स्युः खिलोपश्चानिमि सनि । ईप्सति अहिंधिषति ईर्त्संति ईप्सति दिदम्भिषति ।

८११ । दम्भोयौ ॥

दम्भेरच इ ईश्च स्यादनिमि सनि खिलोपश्च । धिप्सति धीप्सति । अनकारनिर्द्देशात् । दिदे विषति ।

८१२ । च्छ्वोः शूटावगौञ् क्लौम् यङ् लुगोस्तु वा ॥

छकारवकारयोः शकारोटौ स्यातां अगौ

जश्चे क्नौ च यङ्लुकि वे च वा स्तः । दुद्यूषति मित्सति दित्सति धित्सति रिप्सते लिप्सते शिक्षते पित्सति प्रतिरित्सति । हिंसार्थः किं आरिरात्सति ईप्सति ।

८१३ । मुचोऽढेऽढेर्मौचवा सनि ॥

अढस्य मुचोऽढे मौच वा स्यात् सनि । मोक्षते मुमुक्षते ।

८१४ । जयलपोःख्योर्व्ये ॥

खेरुवर्णस्य जकार यलपवर्गात् परे अवर्णे परे इः स्यात् सनि । जु गतौ । जिजावयिषति । रिरावयिषति । पिपावयिषति । बिभावयिषति । जयलपोः किं नुनावयिषति । अतएव अौ द्वित्वे ब्रिः ।

८१५ । अस्रुस्रु द्रु प्रुप्लुच्युङां वा ॥

शिस्रावयिषति सुस्रावयिषति ।

८१६ । व्युङोऽवोहसादेः सेमः क्वाच-किद्वाकृदविदमुषस्तु नित्यम् ॥

उवर्णादेः सेम च कारोऽच इकारोऽव वाक्त-

वर्जात् सन् क्नाच्च किद्वा स्यात् रुदादेस्तु नित्यं। रुरुचिषते ररोचिषते लिलिखिषति लिलेखिषति रुदादेस्तु। रुरुदिषति विविदिषति मुमुषिषति वान्तः किं दिदेविषति।

८१७। अिल्वोःखेषःसः षन्यऽस्वित्स्वत्सहः॥

खेः परस्य अन्तस्तौल्योः सस्य षत्वभूते सनि षः स्यात् न तु स्विद् स्वद् सहां। सुष्वापयिषति तुष्टूषति। अिल्वोः किं सिसिक्षति। षनीति किं तिष्ठासति। खेः किं प्रतीषिषति।

इति सनन्तपादः।

---

यङन्तः।

८१८। सूत्रसूत्रमूत्राटमर्कूर्णुहसाद्येकाचोऽशभरुचोमुर्ज्भ्यशार्थे यङ्॥

एभ्यः शुभरुचवर्जेभ्यो यङ् स्यात् पौनःपुन्ये अतिशये चार्थे।

८१९। गत्यर्थाद्कुलपसदचरजपजभ

दन्शदहो वक्रगर्हे ॥

गत्यर्थाङ्क्रो गादेर्गर्हायां यङ स्यात् नतु पूर्व्वोक्ते तद्युक्ते तु स्यात्।

८२०। खेणु:॥

यङि परे खेणु: स्यात्। पुनःपुनरतिशयेन वा सूत्रयति सोसूत्र्यते सोसूत्रयते शोशुच्यते।

८२१। घेंऽनितः॥

अनकारेतः खेर्घः स्याद्यङि। अटाट्यते अशाश्यते अरार्य्यते ऊर्णोनूयते देदीयते मेमीयते जेगीयते जेहीयते पेपीयते सेषीयते तेष्ठीयते शोशूयते सास्मर्य्यते चेक्रीयते सञ्चेष्क्रीयते विशेषिच्यते। यङन्तत्वावन्न षः वक्रं व्रजति वाव्रज्यते।

८२२। ग्रोरलः॥

गिरते रो लः स्यात् यङि। गर्हितं गिरति जेगिल्यते लोलुप्यते सासद्यते।

८२३। कोस्तुर्व्वा॥

कोः खेस्तुः स्याद्वा यङि। चोकूयते कोकूयते।

८२४ । नीन् वञ्चस्रन्सध्वन्सभ्रन्-सकसपतपदस्कन्दाम् ॥

एषां खेर्नीन् स्यात् यङि । वनीवच्यते ।

८२५ । अमजपजभदहदन्शभन्ज-पमशपोऽतोनुग्लवयस्तु वा ॥

अमन्तानां जपादीनां चादन्तस्य खेर्नुम् स्यात् यङि लवयान्तस्य तु वा । जञ्जन्यते जाजायते जङ्घन्यते ।

८२६ । हनो वा घ्नी ॥

जेघ्नीयते जञ्जप्यते चञ्चल्यते चाचल्यते मम्व्यते मामव्यते दन्दह्यते दादह्यते ।

८२७ । चरफलोरचोऽङो न गुः ॥

चरफलोः खेर्नुम् स्यात् उङ् उकारश्च यङि तस्य च न गुः चञ्चूर्यते पंफुल्यते ।

८२८ । रीनृत्वतः ॥

ऋकारवतो धोः खेरीन् स्याद्यङि । नरीनृत्यते ।

८२८। व्येखपस्तमोर्जिः॥

एषां जिः स्यात् यङि। वेवीयते सोषुप्यते सेसिम्यते।

८३०। न वघः॥

वष्टेर्जिर्न स्यात् यङि। वावश्यते।

८३१। चायः कीः॥

चायतेः की स्यात् यङि। चेकीयते।

८३२ घ्राध्मोर्ङी॥

जेघ्रीयते देध्मीयते।

८३३। शीङोऽङ्य्येऽयौ॥

शाशय्यते।

८३३। यङोलुग्वापोलुक्पं द्वित्वर्व्वादिच धूल्लान्तु वानि तु नित्यं नोऽतः॥

यङो लुक् स्याद्वा लुकि सति अपो लुक्पं द्वित्वं येणुरित्यादि कार्य्यञ्च स्यात् धुग्रहणोल्लान्तु वा स्यादनितु नित्यं लुक् स्यादुदन्तात्त्वनि न स्यात्। बोभवीति बोभोति बोभूतः बोभुवति अबोभवीत् अबोभोत् अबोभूतां अबोभुवन्

वोभुवाञ्चकार। वनीवञ्चीति वनीवङ्क्ति वनीवङ्क्तः। जङ्गमीति जङ्गन्ति जङ्गतः जंगन्ति जङ्गमति जङ्गमीमि जङ्गन्मि जङ्गन्वः जङ्गन्मः। जंङ्घनीति जङ्घन्ति जङ्घतः जंघ्नति जङ्घनति। चञ्चुरीति चञ्चूर्त्ति। चाखातः चंखनति चङ्खनति। जाजातः जञ्जन्तः जंघ्नति जञ्जनति। देदि-वीति देद्योति देदेति देद्युवः देदिवः। वेवीष्टि वेविष्ठः वेविच्छुः।

८३५। हाकः खे नर्घः॥

जहेति जहाति।

८३६। दन्शोनलोपो वा॥

दन्दशीति दन्दंशीति दन्दष्टि दन्दंष्टि।

८३७ जिर्न वा॥

सास्वपीति सास्वप्ति सोषुपीति सोषोप्ति।

८३८। रीणोरिन्णौ वा॥

रीणः स्थाने रिण्रणौ वा स्तो यङ्लुकि। चरिकरीति चर्करीति चरीकरीति चरिकर्त्ति चर्कर्त्ति चरीकर्त्ति।

८३९। यङ्लुक्क्यलोपेऽरे न गुणौ॥

वेभिदिता मर्मृजिता। अरे किं। वेभेत्ति मर्मार्ष्टि।

इति यङन्तपादः।

---

लिधुः।

८४०। लेः काम्यक् स्वेच्छायां॥

लेः परः काम्यक् स्यात् आत्मेच्छायाम्। आत्मनः पुत्रमिच्छति पुत्रकाम्यति।

८४१। क्योऽव्ययादयश्च॥

मान्तव्ययवर्जात् लेः क्यः स्यात् स्वेच्छायां तस्मिन्नवर्ण ईः स्यात्। स्थानीयति ओदौतोऽ-न्वदिति गव्यति नाव्यति। यङङ्क्य इति। कत्रीयति क्यङ्च्वौ च। गार्गीयति।

८४२। नलोपः क्यङे॥

राजीयति।

८४३। हसात्तयोर्वाऽरे॥

हसात् परयोः क्यङयोर्लोपः स्याद्वा रे।

समिन्दिता समिन्धिता । अस्वरात् किं । किं का-म्यति सः काम्यति ।

८४४ । धनोदकाशनतृषाश्वलेर्ग्रह-पानान्नयाभार्थे ङा ङनङ् ङा सन सनऽसनौ क्ये न षः ॥

धनस्य ग्रहणे ङा उदकस्य पाने ङनङ् अशनस्य अन्ने ङा तृषाश्वयोर्याभे सन् लेरर्थे कामेत्र सन् असन् च स्यात् क्ये तस्य सः षो न स्यात् । धनायति उदन्यति अशनायति तृषस्यति अश्वस्यति दधिस्यति दध्यस्यति । ग्रहादौ किं धनीयति ।

८४५ ।ढडोपमानादाचारे क्यः ॥

ढाड्ङाच्चोपमानात् क्यः स्यादाचारेऽर्थे । शिवमिवाचरति शिवीयति विष्णुं विष्णाविवाचरति विष्णूयति शिवे ।

८४६ । षान्ङाक्वौ सलोपश्च वा गल्भक्लीबहोढात्तु मम् ॥

षादुपमानादाचारेऽर्थे ङाक्वौ स्तः सस्य च

वा लोपः गल्भादेस्तु क्वावपि मम् । कृष्ण इवा-
चरति कृष्णायते कृष्णाति । स्वायते स्वति
स्वामास । त्यान्तत्वादाम् । पयायते पयस्यते
गल्भायते गल्भते ।

---

८४७ । भृशादेश्च्व्यर्थे वा तसलोपश्च ॥

भृशादेश्च्व्यर्थे ङ्यक्ङी वा स्तः तस्मिन् तस-
लोपश्च । भृशायते भृशति भृशीभवति चेता-
यते शुक्लायते वेहायते ।

८४८ । डाज् लोहितादेः पश्च ॥

डाजन्तात् लोहितादेश्च च्व्यर्थे ङ्यक्ङी वा
स्तः पश्च । पटपटायते पटपटायति पटपटाति
पटपटास्यात् लोहितायते लोहितायति लो-
हितति लोहितीस्यात् धर्म्मायते धर्म्मायति
धर्म्माति धर्मीस्यात् ।

८४९ । शब्दसुखकष्टादेः कृतिवेद-

पापे ङ् मः ॥

शब्दादेः कृतौ सुखादेरनुभवे कष्टादेः पा-
पार्थे अष्टादेरनुभवार्थे ङ्यः स्यात् । शब्दं

करोति शब्दायते वैरायते । सुखमनुभवति सुखायते दुःखायते । कष्टं कर्म्म करोति कष्टायते पापायते ।

८५० । बाष्पोष्मफेनधूमादुद्वान्तौ ॥

बाष्पायते ऊष्मायते फेनायते धूमायते ।

८५१ । रोमन्थाच्चर्व्वणे ॥

रोमन्थायते गौः ।

८५२ । नमस्तपोवरिवःकण्ड्वादिभ्यः क्यः कृतौ ॥

नमस्करोति नमस्यति तपस्यति वरिवस्यति कण्डूयति कण्डूयते महीयते हृणीयते ।

८५३ । ञेः कृत्याख्याने ञिः ॥

ञेः परो ञिः स्यात् कृतावाख्याने च । प्रश्नं करोति आचष्टे वा प्रश्नयति ऊढयति औडिढत् औजढदित्येके । लुङ्मद्वद्विनामिति । ईप्सन्तमाचष्टे ईप्सयति । सुग्वन्तमाचष्टे सुचयति स्रग्विनमाचष्टे स्रजयति ।

८५४ । श्वेताश्वाश्वतरगालोडिताह्वरकाश्वाश्वतरेतकलोपः ॥

श्वेताश्वमाचष्टे श्वेतयति अश्वयति गालोडयति आह्वरयति।

## ८५५। नाप्सत्यार्थवेदैकाजतः॥

सत्यादेरेकाचोऽकारान्तस्य च णौ नाप् स्यान्नइत्। सत्यापयति अर्थापयति वेदापयति स्वापयति। वाढान्तिकेति साधादयः। साधयति। प्रशस्यमाचष्टे श्रापयति।

## ८५६। णिः कल्यादेः॥

कल्यादेरर्थविशेषे णिः स्यात्। कलिं गृह्णाति कलयति अचकलत् हलयति अजहलत् कृतयति अचीकृतत् अचकृतत्। वर्णयति त्वचयति तूस्तानि विनिहन्ति वितूस्तयति। वस्त्रं संच्छादयति संवस्त्रयति। वर्म्मणा संनह्यति संवर्म्मयति चूर्णैरवध्वंसते अवचूर्णयति। हस्तिनातिक्रामति अतिहस्तयति वीणया उपगायति उपवीणयति। तूलैरवकुष्णाति अवतूलयति। श्लोकैरुपस्तौति उपश्लोकयति सेनया अभिमुखं याति अभिषिषेणयति अभिषेणयाविषात। रूपं

पश्यति रूपयति लोमान्यनुमार्ष्टि अनुलोमयति।
हस्तौ निरस्यति अति हस्तयति पुच्छमुत्क्षिपति
उत्पुच्छयते। भाण्डानि संचिनोति संभाण्डयते
चीवरं समार्जयति परिदधाति वा सञ्चीवरयते
भिक्षुः।

८५७। लिघोर्यथेष्टं द्विः कण्ड्वाद्यजा-
द्योस्तु तृतीयानाद्योः॥

पुपुत्रीयिषति पुतित्रीयिषति पुत्रीयियिषति
पुत्रीयिषिषति पुपुतित्रीयियिषिषति अशिश्वी
यिषति कण्डूयियिषति।

इति लिधुपादः।

---

पम्।

८५८। घे पं परानुकृप्रत्यभ्यतिक्षिप-
प्रवहपरिमृषव्यापरिरमोवातूपरमः॥

एभ्यः पं स्यात् घे उपरमस्तु वा। पराक-
रोति अनुकरोति प्रतिक्षिपति प्रवहति परि-
मृष्यति विरमति आरमति परिरमति उपरमति
उपरमते विष्णुः।

८५९ । कम्पान्नार्थेङ्बुधयुधप्रुद्रुस्रुजननशोऽजिप्राणिवाढाच्च अेः ॥

चलयति भोजयति अध्यापयति बोधयति योधयति प्रावयति द्रावयति स्रावयति जनयति नाशयति आययति लक्षणं यथोदा । प्राणिधात् किं शोषयते शालिं । अढात् किं भक्तिं कारयते । अजौ किं रूपयते हरिः ।

इति पपादः ।



मम् ।

८६० । विपराजिपरिव्यवक्रीनिविशानुप्रच्छोम ॥

एभ्यो मं स्यात् घे । विजयते पराजयते परिक्रीणीते निविशते आनुते आपृच्छते ।

८६१ । आदाञोऽस्वप्रसारे ॥

आदत्ते । । स्वप्रसारे तु व्याददाति मुखं लक्ष्मः ।

८६२ । आगमेः क्षान्तौ ॥

आगमयते कालम् ।

८९३ पर्य्यन्ववाङः क्रीडः ॥

परिक्रीडते अनुक्रीडते अवक्रीड़ते आक्रीड़ते

८९४। समोऽकूजने ॥

संक्रीड़ते । कूजने तु संक्रीड़ति चक्रम् ।

८९५ ॥ कोऽपाद्धर्षान्नवासेच्छे चतुष्पाद्वौ सुम् च ॥

अपस्किरते मत्तः कुक्कुटः श्वा वा अन्यत्र मलोऽपकिरति गजोऽपकिरत्यश्वः ॥

८९६। शपथाशोर्गत्यनुकारे शपनाथहृञः ॥

कृष्णाय शपते गोपी मोक्षाय नाथते मुनिः पैतृकमनुहरते अश्वः ।

८९७। प्रतिज्ञानिर्णयप्रकाशे संप्रव्यवाद्वस्थः ॥

नित्यं शब्दमातिष्ठते । त्वयि तिष्ठते विवादः । रामाय तिष्ठते सीता । संतिष्टते प्रतिष्ठते अवतिष्ठते ।

८६८। उदोऽनूर्द्ध्वकर्म्मणि ॥

मुक्तावुत्तिष्ठते अन्यत्र आसनादुत्तिष्ठति ग्रामच्छत मुत्तिष्ठति।

८६९। मन्त्रेण्णोपात् ॥

गायत्र्योपतिष्ठते अर्कम्।

८७०। मैत्राध्वसङ्गाराधे ॥

सन्तमुपतिष्ठते साधुः गङ्गामुपतिष्ठते पन्थाः पतिमुपतिष्ठते नारी विष्णुमुपतिष्ठते वैष्णवः।

८७१। लिप्सायाम्वा॥

भिक्षुर्धार्म्मिकमुपतिष्ठते उपतिष्ठति वा।

८७२। अढ़ात् ॥

स्नानमुपतिष्ठते।

८७३। समोगम्यृच्छिप्रच्छिस्वृश्रुवेत्त्यर्त्तिदृशः ॥

संगच्छते समगत समगंस्त सङ्गसीष्ट समृच्छते संपृच्छते संस्वरते संशृणुते संवित्ते संविद्रते संविदते समियते संपश्यते। अढात् किं कन्यां सङ्गच्छति।

८७४ । गेर्व्वास्योहोढे च

निरस्यते निरस्यति समूहते समूहति ।

८७५ गेरुहः स्वोर्य्यौ ॥

ब्रह्म समुह्यात् ।

८७६ । आत्माङ्गढादद्ढाच्चाऽह्नयमः ॥

उर आहते पादमायच्छते आहते आय-
च्छते ।

८७७ । हनः कित सिः ॥

आहत: आवधिष्ट आहसातां आवधिषातां
अन्यत्र शत्रुमाहन्ति परशिर आयच्छति ।

८७८ । यनः सूचने वा तूद्वाहे ॥

रामः सीतामुपायत उपायंस्त ।

८७९ । व्युत्त पः ॥

वितपते उत्तपते पाणिं वितपते उत्तपते
आत्माङ्गढादढाच्च किं महीं वितपत्यर्कः ।

८८० । तपोढ़ाद्यक्च रे ॥

तप्यते तपस्तापसः रे किं अतप्त ।

८८१ । सृजः आद्वृघात्मनोण च ॥

सृज्यते स्रजं भक्तः अस्रर्जि आद्रघात् किं स्रजति स्रजं मालिकः ।

८८२ । निसंव्युपह्वः ॥

निह्वयते संह्वयते विह्वयते उपह्वयते ।

८८३ । स्पर्द्धायामाङः ॥

कृष्णाश्चानूरमाह्वयते ।

८८४ । सूचनावक्षेपणसेवासाहस प्रतियत्नकथोप योगे कृञः ॥

अपकुरुते श्येनो वर्त्तिकां उपकुरुते विष्णुं, प्रकुरुते परदारान् प्रकुरुते एधोदकस्योपस्कुरुते गीताः प्रकुरुते शतं प्रकुरुते ।

८८५ अधेः शक्तौ ॥

दैत्यानधिकुरुते कृष्णः ।

८८६ । शब्दढाढाद्वे ः ॥

स्वरान् विकुरुते अन्यत्र चित्तं विकरोति कामः ।

८८७ । ज्ञानार्थैत्यपोपनयभृति विगणव्ययेषु नीञः ॥

शास्त्रं नयते विष्णुं नयते दण्डमुन्नयते पुत्रमुपपनयते भृत्यमुपनयते ऋणं विनयते द्रव्यं विनयते।

८८८। धस्थामूर्त्तढात्॥

क्रोधं विनयते। धस्थं किं गुरोः क्रोधं विनयति अमूर्त्तं किं गण्डं विनयति।

८८९। वृत्तुत्साहतायने क्रमः परोपः क्रमः॥

ऋचः क्रमते बुद्धिः धर्म्माय क्रमते साधुः सतां श्रीः क्रमते पराक्रमते उपक्रमते।

८९०। अङोभोद्गमे॥

आक्रमते अर्कः। भोद्गमे किं आक्रामति धूमः खं व्याप्नोतीत्यर्थः।

८९१। वेःपद्भिः॥

साधु विक्रमते वाजी। पद्भिः किं वाजिना विक्रामति।

८९२। प्रोपादारम्भे॥

भोक्तुं प्रक्रमते उपक्रमते।

८९३। वागे:॥

क्रमते क्रामति।

८९४। निह्नवे ज्ञ:॥

शतमपजानीते

८९५। अद्धात्॥

सर्पिषो जानीते।

८९६। संप्रतेरस्मृतौ॥

संजानीते प्रतिजानीते अस्मृतौ किं पुत्रं संजानाति।

८९७। अंडेंऽऔघे॥

दर्शते भवोयक्तान् अजौ यत् ढं तज्जेत् य इति किं दर्शयति शम्भुं भक्तान् भक्ति:। स्मृतौतु स्मारयति भक्तान् हरि:।

८९८। ज्ञानयत्नप्रलोमे वद॥

पाणिर्निर्वदते चेत्ने वदते शिष्यमुपवदते।

८९९। अनोरद्धात्॥

अनुवदते।

९००। विमतिव्यक्तस ज्ञोक्तयो:॥

विवदन्ते शिष्याः व्यक्तं किं संवप्रदन्ति खगाः

९०१ । तद्योगे वा ॥

विप्रवदन्ते विप्रवदन्ति वैद्याः ।

९०२ । अवाद्गिरः ॥

अविगिरते ।

९०३ । समप्रतिज्ञायां ॥

शतं संगिरते ।

९०४ । उच्चरः सढात् ॥

धर्ममुच्चरते सढात् किं धूम उच्चरति ।

९०५ । समस्त्रा ॥

अश्वेन सञ्चरते ।

९०६ । दानः सा चेच्चार्थे ॥

दास्या संयच्छते कामी च्युर्थे किं दास्या संयच्छति भिक्षां भिक्षवे ।

९०७ । उपयमोविवाहे ॥

रामः सीतामुपायत उपायस्त ।

९०८ । भुजोऽशने ॥

शालीन् भुङ्क्ते अनशने तु पृथ्वीं भुनक्ति राजा

९०९ । संक्ष्णोः ॥

ग्रस्त्रं संक्ष्णुते ।

९१० युजिरुदृग्यचोऽयज्ञपात्रे ॥

उद्युङ्क्ते प्रयुङ्क्ते । यज्ञपात्रेतु प्रयुनक्ति स्रुवम् ।

९११ । प्रतारे वञ्चिगर्द्धेः ॥

वटुं वञ्चयते गर्द्धयते । प्रतारे किं सर्पं नोऽहिं वञ्चयति ।

९१२ । पूजाभिभवे च लापेः ॥

जटाभिः लापयते श्येनोवर्त्तिकामुल्लापयते पुत्रमुल्लापयते । एषु किं घृतं विलापयति ।

९१३ । मिथ्याकारेरभ्यासे ॥

पदं मिथ्या कारयते । मिथ्या किं साधुपदं कारयति अभ्यासे किं सकृत्पदं मिथ्या कारयति ।

९१४ । व्यतीहारे गतिहिंसाशब्दार्थहसान्यहृवहोऽनन्योन्यार्थे ॥

व्यतिभवते ग्रन्थः व्यतिहरते व्यतिजघ्निष्व व्यतिजघ्नम् ।

९१५ । होऽस्तेरेति ॥

अस्तेर्ङ्ः स्यादेकारे । व्यतिहे । गत्यर्था देस्तुव्यतिसर्पन्ति व्यतिघ्नन्ति व्यतिजल्पन्ति व्यतिहसन्ति । अन्योन्यार्थेतु परस्परं व्यतिलुनन्ति ।

८१६ स्मृदृशऽननुज्ञानाप्रतिश्रोः सनः

सुस्मूर्षते दिदृक्षते जिज्ञासते शुश्रूषते । अन्यत्र अनुजिज्ञासति आशुश्रूषति प्रतिशुश्रूषति ।

८१७ ञिञ् अरान्तपिबधेनृद्दृवस-दमवादपरिमुहायमयसोऽगिज्ञापव दाग्रन्थात् समायम फलिनि ॥

ञितो अरान्तपिवादेरगिजानातेरपवदोऽग्रन्थोदादिपूर्व्वेयमश्च फलवति घे ङं स्यात् ।

यजते पाययते धापयते नर्त्तयते वादयते वासयते दमयते रोचयते आदयते परिमोहयते आयामयते आयासयते जानीते अपवदते उद्यच्छते संयच्छते आयच्छत ग्रन्थे तु वेदमुद्यच्छति फलिनि किं यजति याजकः ॥

इति ङपादः ।

---

## ढभावः।

९१८। ढभावे मं॥

धोढें भावे च मं स्यात्।

९१९। रतनोर्यगिनौ॥

धोरे परे यक् तनि परे इण् स्यात् ढे भावे च।
स्तूयते विष्णुः स्तूयेत स्तूयतां अस्तूयत अस्तावि।

९२०। हनग्रहदृशांऽचः सिड्वादेर्मिण् वा॥

एभ्यः परासां सिड़ीढीतीयीनां मिण् वा स्यात् ढभावे। अस्ताविषातां अस्तोषातां हरिहरौ, तुष्टुवे स्ताविता स्तविता स्तोता स्ताविषीष्ट स्तोषीष्ट स्ताविष्यते स्तोष्यते अस्ताविष्यत अस्तोष्यत। स्मर्य्यते अर्य्यते संस्क्रियते।

९२१। नेण् तपोऽनुतापे॥

अन्वतप्त। दीयते।

९२२। यन् ञ्णित्कृदिख्यातः॥

आदान्तानां यन् स्यात् ञित् कृत इणि च। अदायि अदायिषातां अदिषातां। हन्यते

अवधि अघानि अवधिषातां अघानिषातां अह-
सातां गृह्यते अग्राहि अग्राहिषातां अग्रहीषातां। दृश्यते अदर्शि अदर्शिषातां अदृक्षातां।
शम्यते मोहो मुकुन्देन। अशमि अशामि
अशमिषातां अशामिषातां अशमयिषातां
अशामयिषातां।

## ६२३। भावे माद्यं॥

मस्याद्यं वचनं भावे प्रयुज्यते। मया भूयते
अभावि बभूवे बुभूवे भाविता भविता। शम्यते
मुनिना अशमि। अकामि अवामि आचामि
व्यस्रमि व्यस्रामि अवधि अजागारि, औतु अजा-
गरि अजागारि।

## ६२४। भञ्जिगिलभोर्वेत्समेोर्नलोपः॥

अभाजि अभञ्जि अलाभि अलम्भि, गौतु प्रालम्भि

## ६२५। ढवद्ढघोढे॥

ढसेव घत्वं प्राप्तं ढघः सच ढवत् स्यात् न तु
ढे सति। तथाच। क्रियमाणन्तु यत् कर्म्म
स्वयमेव प्रसिध्यति। सुकरैः स्वैर्गुणैः कर्त्तुः कर्म्म
कर्त्तेति तद्विदुः। स्वयमेव भिद्यते काष्ठं अभेदि।

६२६। कुषिरञ्जः श्यन् पे वा रे॥

कुष्यति कुष्यते रज्यति रज्यते।

६२७। वेणाजदुहः॥

अजन्ताद्दुहश्च इण् स्याद्वा ढघे। अकारि अकृत अदोहि अदुग्ध।

६२८। न तपरुधसढपचदुहः॥

तपोरुधः सढाभ्यां पचदुहाभ्याञ्च इण् न स्यात् ढघे। अतप्त अरुद्ध अपक्त आम्रः फलं अदुग्ध गौर्दुग्धम्। अत एवानयोर्ढेऽपि ढघत्वम्।

६२९। सनश्रन्थग्रन्थब्रूकॄगॄदुहनमभूषा-र्थोद्यक्च ञिस्नुश्रिमाद्याच्चञिण्॥

सनन्तादेरिण् यक्च न स्यात् ढघे ण्यन्तादेस्तु ञिण् वर्जं। चिकीर्षते अचिकीर्षिष्ट श्रथ्नीते अश्रन्थिष्ट ग्रथ्नीते अग्रन्थिष्ट ब्रूते अवोचत किरते अकीर्ष्ट गिरते अगीर्ष्ट दुग्धे अदुग्ध नमते अनंस्त तंसते अतंसिष्ट कारयते अचीकरत अकारयिष्ट अकारिष्ट स्नुते अस्नाविष्ट अस्नोष्ट श्रयते अशिश्रियत अश्रायिष्ट आहते

**६३०। न्यादिभ्रन्ताढगत्यर्थामुख्येढ़-ढत्वमाप्नुयुः। गौणे याचादयोऽन्येतु यथेष्टं द्विढधुष्विति॥**

निन्ये विजनमजागरि रजनिमगमिमदमयाचि सम्भोगं। गोपीहावमकार्य्यत भावश्चैनामनन्तेन।

इति ढभावपादः।



क्तिः।

**६३१। भवद्भूतभव्ये त्रिशः क्याद्याः॥**

क्याद्याःक्तयस्तिस्त्रस्तिस्रः क्रमाद्वर्त्तमानातीत भविष्यत्सु कालेषु स्युः। शेते स चित्तशयने मम मीनकूर्म्मको लोऽभवन्नृहरिवामनयाम-दग्नरः। यो भूद्ववूवभरताग्रज कृष्णबुद्धकल्की सताञ्च भरिता प्रहरिष्यतेऽरीन्।

**६३२। कीस्मेनातीते।**

हन्ति स्म रावणं रामः॥

**६३३। यावत्पुराभ्यां भव्ये॥**

यावद्भवति कलकी पुरा हन्ति पात्की।

६३४ । कदाकर्हिंभ्यां वा ॥

कदा पश्यामि गोविन्दं कर्हि द्रक्ष्यामि शङ्करं ।

६३५ । किम्भिर्लिप्सायां ॥

डतरडतमत्यन्तकिमोरूपैर्योगे भव्ये की स्यात् वा लिप्सायाम् । कतरः कतमः कोवा भिक्षां रास्यति राति वा ।

६३६ । लिप्स्यसिद्धौ ॥

लिप्सेनान्नादिना स्वर्गादेः सिद्धौ सत्यां भव्ये की वा स्यात् । यो भिक्षां ददाति दास्यति वा स स्वर्गं याति यास्यति वा ।

६३७ । व्यर्थाशंसयोः ॥

व्याश्रर्थे प्रेष्यादावाशंसायाञ्च भव्ये को वा स्यात् । गुरुश्चेदायाति आयास्यति वा अथ त्वं वेदमधीष्व वयं तर्कमधीमहे ।

६३८ । जात्वपिभ्यां सदा चेपे ॥

जातु निन्दसि गोविन्दमपि निन्दसि शङ्करं ।

६३९ । कथमा स्वीच वा ॥

कथं निन्दस्वं निन्देः मम [illegible] देवीं निनिन्दिथ ।

९४० । किंभि ख्लीत्यौ ॥

कोनिन्दिष्यति लक्ष्मीशं निन्देत्कतर ईश्वरं ।

९४१ । अन्यैस्त्वाश्रद्धामर्षे ॥

न श्रद्दधे मर्षये नो यत्त्वगर्हिष्यते हरिं ।
शिवं गर्हेत कोनिन्देत् विष्णुं निन्दिष्यतीश्वरं ।

९४२ । किंकिलास्त्यर्थाभ्यां तौ ॥

त्वं किंकिल हृषीकेशं निन्दिष्यसि न मंस्यसे ।
महादेवश्चासि नाम श्रद्दधे नो न मर्षये ।

९४३ । जातुयद्यदायदिभिः ख्ली ॥

न मर्षये श्रद्दधे नो जातु निन्देज्जनार्दनं ।

९४४ । यच्चयत्राभ्यां क्षेपचित्रे च ॥

यच्च निन्देद्विभुं गर्हे चित्रं श्रद्धां न मर्षये ॥

९४५ । चित्रेत्वयदिना ॥

यदि वर्जितेन शब्दमात्रेण योगे चित्रे गम्ये सदा तौ स्यात् । चित्रं दूष्यति नामान्धः कृष्ण पश्येत् यदीश्वरं ।

९४६ । बाढेऽप्युताभ्यां ख्ली ॥

अपि हन्यादयं ग्रामुत हन्तं दवं वर्षेत् ॥

९४७। प्रौढ्यासम्भावने ॥

प्रौढिः सामर्थ्यं। सम्भावनं क्रियासु योग्यताध्यवसायः। प्रौढिहेतुकसम्भावनोपाधिकेऽर्थे वर्त्तमानाद्धोः सदा स्त्री स्यात्। अपि हिंस्याज्जगन्मायो महापातकपञ्चकं।

९४८। श्रद्धार्थे वाऽयदि ॥

श्रद्दधेऽजं भजेः प्राणैर्भं न श्रद्दधेऽजं बभक्ष्यत।

९४९। भव्ये वा फलहेत्वोः ॥

यं यायाश्चेत्स्मरेदीशं श्रीशं संस्यति यास्यति।

९५०। कामोक्तेऽकच्चिति ॥

कामं भजेद्भवान् भर्गं कच्चिदर्शिष्यते शिवं।

९५१। णो चेच्छार्थैः ॥

इच्छामि सर्वे सेवेत श्रीपतिं सेवतां भवान्।
कामोक्त इति किं इच्छन् करोति।

९५२। विधिनिमन्त्रणामन्त्रणाध्येषणा-संप्रश्नप्रार्थनाप्रैष प्राप्तकालादौ ॥

ततः कामं कुर्य्याम्, इह भुञ्जीत भवान्, इह

धीयीत भवान्, पुत्रमध्यापयेद्भवान्, किं भो वेद-मधीयीय, भो भोजनं लभेय, प्रेषितस्त्वं गङ्गां गच्छेः, प्राप्तस्तेकालस्तपः कुर्य्याः । एवं गीः ।

६५३ । समर्थनाशिषोर्गीः ॥

अशक्येऽध्यवसायः समर्थना । सिन्धुमपि शोष-याणि ।

६५४ । तुह्योस्तातङ् वाशिषि ॥

पातु पातात् वः शिवः, पाहि पातात् वः शिवः ।

६५५ । मुहुर्भृशार्थे हि त स्व ध्वं ॥

पौनःपुन्ये अतिशये चार्थे सदाकाले ग्याहित-स्वध्वं स्युः । मुहुर्भृशं वा लुनाति लुलाव लविष्यति वा, लुनीहि लुनीत लुनीष्व लुनीध्वं ।

६५६ । मास्मे न घीद्यौ ॥

मास्मशब्देन योगे सदा धीद्यौ स्तः । मास्मभ-वत् दुःखं मास्मभच्छोकः ।

६५७ । मा टी वा ॥

मायोगे सदा टीस्यात् वा । मा विरंसीत् माविरमतु माविरंस्यति ।

६५८ । क्याशिषि ॥

जीव्यात् चिरं सज्जनः ।

९५९ । स्म्यस्त्ययदि त्वतीते ॥

स्मरणार्थैर्योगेऽतीते काले ती स्यात् यच्छब्द स्चेन्नप्रयुज्यते । अत्रपवादोऽयं । स्मरस्येनं नंस्य-सीभं यत् स्मरस्यानमः शिवं ।

९६० । वाऽनेकस्मार्थ्ये ॥

अनेकस्मार्थ्ये प्रयोक्तरि सति स्मरणार्थैर्योगेऽ-तीते काले ती वा स्यात् । ध्यायसीदं यदीशानं द्रक्ष्यति स्तोष्यते भवान् ।

९६१ । ध्वर्थासम्भवे थी ॥

धोरर्थस्यानिष्पत्तौ सदा थी स्यात् । ज्ञानञ्चेद् भविष्यत्, सुखमभविष्यत् ।

९६२ । लियुष्मदस्मदि त्यादि त्रिशः ॥

लौ युष्मदि अस्मदिच त्यस्यार्थे प्रयुज्यमाने त्यादीनि त्रीणि त्रीणि क्रमात् स्युः ।

जानाति योऽखिलं यश्च न जानीतः श्रुतिस्मृती शास्त्राणि च न जानन्ति स मया सेव्यते शिवः ।

भासि त्वमेको [illegible] [illegible]ऽनुता[illegible] युवां ।

भाय यथं हरिहरब्रह्माद्याः पान्त्यनेकधा।
एको भवामि स भवेऽहमादौ दारैरथोभौ स्म
भवाव आवां। वयं भवामो बहवः स्म पुत्रैस्त्व-
न्मायायाद्यापि विभो प्रसीद।

इति तिपादः।

इति मुग्धबोधव्याकरणे त्याद्यन्ताधिकारः

समाप्तः।

---

त्यः।

९६३। क्लहोः कभावे ॥

वक्ष्यमाणस्त्यः कृत्संज्ञः स्यात् स च धोः परः
स्यात् स च के भावे च स्यात्।

९६४। सरूपोबाध्यः ॥

समानरूपस्त्यः कृता बाध्यते न त्वसरूपः।

९६५। तव्यानीययाढभावे ॥

धोरेते स्युः ढभावे। चेतव्यं चयनीयं चेयं
पुण्यं भवितव्यं भवनीयं भव्यं त्वया॥

९६६। [illegible]

भाभूपूञ्कमगमप्यायवेपानिजादेर्दि-
तोऽनिहसादीजुङ्स्तु वा ॥

अन्तरो दुर्वर्जगेश्च परस्य णोविधिहेतौ सति तस्माच्चः परस्य णः स्यात् न तु ख्यादेः इजादिवर्जैर्हितश्च ञ्यन्ताद्धसादीजुङस्तु वा ।

अन्तर्याणीयं प्रयाणीयं । प्रयापणीयं प्रयापनीयं प्रकोपणीयं । ख्यादेस्तु प्रख्यापनीयं प्रभापनीयं प्रभवनीयं प्रपवनीयं प्रकमनीयं प्रगमनीयं प्रप्यायनीयं प्रवेपनीयं प्रकम्प-नीयं । इजादेस्तु प्रेङ्खणीयं ।

९९७। खनादेरेये ॥

खन आदन्तस्य च टेरेः स्यात् ये परे । खेयं देयं ।

९९८। घ्यणोरावश्यके ॥

उवर्णान्ताद्वश्यम्भावेऽर्थे घ्यण् स्यात् ढभावे । विभेण घुचिना भाव्यं ।

९९९ । हस्ताप्यासोः ॥

हसन्तादुवर्णान्तात् यौतेरामुनोतेश्च घ्यण्

स्यात् ढभावे । वाच्यं घात्यं जन्यं वध्यं कार्य्यं याव्यं आमाव्यं ।

६७० । चजोः कगौ घित्यऽरेमन्तायज्ञा-
कूयजगत्यर्थवञ्चां ॥

तिति परे चजोः कगौ स्तो न तु सेमृत्कादेः । पाक्यं रोग्यं गतौ तु वञ्च्यं अन्यत्र वंक्यं काष्ठं ।

६७१ । नावश्यके त्यजयजप्रवचाञ्च
घ्यणि ॥

आवश्यकेऽर्थे एषां चजोः कगौ न स्तो घ्यणि । अवश्य पाच्यं त्याज्यः याज्यः प्रवाच्यं ।

६७२ ।भुजवचनिप्रयुजोऽन्नाशब्दशक्ये॥

भुजोभक्ष्येऽर्थे वचोऽशब्देऽर्थे निप्रपूर्व्वस्य युजः शक्येऽर्थे चजोः कगौ न स्तो घ्यणि । भोज्यं वाच्यं नियोज्यः प्रयोज्यः । एषु किं भोग्या भूः वाक्यं पदसमुदायः नियोक्तुमर्हति नियोग्य प्रभुः ।

६७३ । पाय्यधाय्यप्रणाय्यनाय्यकुण्ड-
पाय्यसन्नाय्यराजसूयसान्नाय्यनिकाय्य

परिचाय्योपचाय्यचित्याग्निचित्यासमू-
ह्यामावस्यामवास्यायाज्याः ॥

एते ध्यणन्ता निपात्यन्ते । पाय्यं मानं
इधात्यग्निमिति धाय्या सामधेनी धाय्या ऋत्विजः
प्रणाय्यो असम्मतः प्रियो वा । आनाय्यो दक्षि-
णाग्निः कुण्डैः पीयते अत्र सोम इति कुण्ड-
पाय्यः क्रतुः सञ्चाय्यः क्रतुः राज्ञा सूयते राज
सूयः क्रतुः सान्नाय्यं हविः निकाय्यो निवासः
परिचाय्योऽग्निः उपाचाय्योऽग्निः चित्योऽग्निः अग्ने-
श्चयनमिति अग्निचित्या समूह्योऽग्निः सम्बाह्य
इत्यर्थः अमा सहवसतोऽस्यां चन्द्रार्काविति अमा-
वास्या अमावस्या यजन्ति अनया इति याज्या
निपातो ह्यर्थविशेषे ॥

६७४ । पुशकसहतकचतयतमसोऽच
मवपरप्रलपलपदभोयो भजजपयजान
मस्तु वा ॥

पवर्गान्तात् शकादेश्च चमादिवर्जात् यः
स्यात् ढभावे भजादेस्तु वा । रम्यं शक्यं सह्यं
तक्यं चत्यं यत्यं प्राप्यं भव्यं भाग्यं जप्यं जाप्यं यज्यं

याज्यं आनाय्यं आनायमन्त्रम् । चस्मादेस्तु आचामंत्र वाप्यं राप्यं लाप्यं वाप्यं दाप्यं अनकारनिर्देशात् ।

६७५ । याल्लभोमुण् ॥

आङ्पूर्व्वस्य लभोमुण् स्यात् यकारेपरे ॥

आलम्भ्या गौः ॥

६७६ । उपात् स्तुतौ ॥

उपपूर्व्वस्य लभो मुण् स्यात् ये परे प्रशंसायाम् । उपलम्भ्यः साधुः स्तुतौ किं उपलभ्यमस्मात् किञ्चित् ।

६७७ । गदमदयमचराचरोऽगेर्य्यः ॥

अगिभ्य एभ्यो यः स्यात् ढभावे । गद्यं मद्यं यम्यं चर्य्यं आचर्य्यं अगेः किं प्रगाद्यं अभिचार्य्यम्

६७८ । पण्यावद्यवर्य्याचार्य्यवह्यजन्यजन्यक्रय्यार्य्योपसर्य्याजर्य्यम् ॥

एते याना निपात्यन्ते । पण्यं विक्रेयं अवद्यं अनिष्टं वर्य्या कन्या । वर्य्यं श्रेष्ठं आचार्य्यो गुरुः उह्यतेऽनेनेति वह्यं शकटं जेतुं शक्यं जय्यं एवं क्षय्यं क्रय्यं हट्टे प्रतारितम् । अर्य्यः स्वामी वैश्यो वा उपस्थियत इत्युपसर्य्या ऋतुमती न

जीर्य्यतीत्यजर्य्यं सङ्गतम्।

६७९। इण्वृजुषस्तुशासुदृङ् इञोऽकृपचृत ऋचपाणिसृजसमवसृजः क्यप्।

इणादेः ऋकारोङो इङो इञश्च कृपादिवर्जात् क्यप् स्यात् ढभावे।

६८०। स्वस्य तन् पिति॥

स्वृन्तस्य तन् स्यात् पिति परे। आदृत्यः वृत्यः जुष्यः स्तुत्यः शिष्यः इध्यः इत्यः। कृपादेस्तु कॢप्यं चर्त्यं अर्च्यं पाणिसर्ग्या समवसर्ग्या रज्जुः॥

६८१। कृवृषमृजगुहदुहशंससंभृप्रत्यपिग्रहो वा॥

एभ्यः क्यप् स्यात् वा ढभावे। कृत्यं कार्य्यं वृष्यं वर्ष्यं मृज्यं मार्ग्यं गुह्यं गोह्यं दुह्यं दोह्यं शस्यं शंस्यं संभृत्यः संभार्य्यः प्रतिगृह्यं प्रतिग्राह्यं अपिगृह्यं अपिग्राह्यं।

६८२। गृह्याविनीयविपूयजित्यासूर्य्यरुच्याव्यथ्यभिद्योद्ध्यपुष्यसिध्यतिष्याजर्य्यकृष्टपच्यकुप्यभार्य्याः॥

एते क्यवन्ता निपात्यन्ते। प्रगृह्यं पदं कृष्णगृह्याः कृष्णवर्ग्याः गृह्योऽस्वैरी ग्रामगृह्याः ग्रामवाह्या विनीयः कल्कः विपूयो मुञ्जः जित्या हली सरतीति सूर्य्यः एवं रुच्यः अव्यथ्यः। कुलं भिनत्तीति भिद्यो नदः वार्य्युज्झतीति उद्यो नदः कार्य्यं पुष्णातीति पुष्यो नक्षत्रं कार्य्यं साधयतीति सिध्यः स एव तिष्योपि आज्यं घृतं युग्यं वाहनं कृष्टे स्वयं पच्यत इति कृष्टपच्यो व्रीहिः कुप्यं सुवर्णरूप्याभ्यामन्यत् भार्य्या वधूः भार्य्या क्षत्रिया।

९८३ लेर्वदः क्यप्यौ॥

लेः पराद्वदः क्यप् यौ स्तो ढभावे। ब्रह्मणा उद्यते इति ब्रह्मोद्या ब्रह्मवद्या कथा।

९८४। मृषोद्यं नित्यम्॥

९८५। भूहनः क्यप् भावे नतस्त॥

लेः पराभ्यामाभ्यां क्यप् स्यात् भावे हनो नस्य तश्च। ब्रह्मत्वं ब्रह्मभूयं ब्रह्महत्या।

९८६। धोः केलिमोढ वे॥

धोः परः केलिमः स्यात् ढघे। स्वयमेवपच्यन्ते

इति पचेलिमाः तण्डुलाः । भिदेलिमामाषाः।

९८७। ते ल्याः शक्यार्हप्रेष्यानुज्ञाप्राप्तकाले वा ॥

तव्यादयो ल्यसंज्ञाः स्युः ते च शक्याद्यर्थेषु वा स्युः । वोढं शक्यो वोढव्यः वहनीयः वाह्यः श्रोतुमर्हः श्रोतव्यः श्रवनीयः श्रुत्यः । प्रेषितस्त्वं त्वया गन्तव्यं गमनीयं गम्यम् । अनुज्ञातस्त्वं त्वया अध्येतव्यं अध्ययनीयं अध्येयम् । प्राप्तस्ते कालः त्वया ध्यातव्यं ध्यानीयं ध्येयम् ।

इति ल्यपादः ।

---

## टनादिः ।

९८८। टस्रकौ घे ॥

घोस्तृन्णकौ स्तो घे ।

करोतीति कर्त्ता कारकः दरिद्रायकः ।

९८९। गखेचोपकपाददहारकौढे ॥

एतौ निपात्यौ ढे ।

९९०। माहीत् क्रमोनेम् टणः ॥

प्रक्रान्ता उपक्रान्ता ।अन्यत्र क्रमिता अतिक्रमिता

९६१। ग्रहनन्दिपचादेर्णिननान् घे॥

ग्रहादेर्णिन् नन्द्यादेरनः पचादेरन् स्यात् घे ग्राही स्थायी प्रपायिणौ नन्दनः विचक्षणः जनार्द्दन मधुसूदनः लवनः पचः देवः लेल्यः लोलुवः रोरूयः ।

९६२। चिक्लिदचक्नसचराचरच-लाचलपतापतवदावदघनाघनपाटुपटा वा॥

एते अनन्ता निपात्यन्ते वा । पक्षे क्लेदः क्नसः चरः चलः पतः वदः हनः पटः,

९६३। रात्रेर्मन् वा कृति॥

रात्रिञ्चरः रात्रिचरः ।

९६४। क्ष गृ ज्ञा प्रीजुङः कोदु-होघङ् च॥

क्षादेरिजुङश्च कः स्यात् तस्मिंश्च दुहो घङ् स्यात् । घे किरः गिरः ज्ञः प्रियः क्षिपः भूरुहः कामदुघा ।

९६५। हनजनादगमादेर्डः॥

हनो जन आदन्तात् गमादेश्च डः स्यात् घे । शोकापहः वराहः सरसिजः पङ्कजः अजः गोदः द्विपः प्रहुः आशुगः नगः गिरिशः वारिः चरतीति वार्च्चींहं सः ।

९९६ । घेट्दृशपाघ्राध्मः शः ॥

एभ्यः शः स्यात् घे । उद्धयः उत्पश्यः उत्पिवः उज्जिघ्रः उद्धमः ।

९९७ । साहिसातिचेतिवेद्येजिधारिपारिलिम्पविन्दोऽगे ॥

अगेभ्य एभ्यः शः स्यात् घे । साहयः सातयः चेतयः वेदयः एजयः धारयः पारयः लिम्पः विन्दः गोविन्दः ।

९९८ । दुनीभूज्वलाद्यास्रुसंस्रोर्णो वा ॥

अगेभ्य एभ्यो णः स्यात् घे वा । दावः द्रवः नायः नयः भावः भव ज्वालः ज्वलः चालः चलः आस्रावः आस्रवः संस्रावः संस्रवः ।

९९९ । श्वसव्यधतनदावहृसः ॥

एभ्यो णः स्यात् घे श्वासः व्याधः प्रत्यायः अवतानः दायः धायः अवसायः ।

१००० । नृत् खनरन् जः षकः ॥

एभ्यः षकः स्यात् घे । नर्त्तकी खनकी रजकी ।

१००१ । गोऽथनट् थकौ ॥

गायतेरेतौ घे स्तः । गाथनो गाथकः ।

१००२ । हायनः ॥

अयं निपात्यते । भावं जहातीति हायनो वर्षः अम्बु जहातीति हायनो व्रीहिः ।

१००३ । प्रु द्रु स्रु सृ लवोऽकः ॥

एभ्योऽकः स्यात् घे प्रवकः द्रवकः स्रवकः सरकः लवकः ।

१००४ । आशिषि ॥

जीवतादिति । जीवकः ।

१००५ ॥ नाम्न्यन्ये तिक् च ॥

वोराशिषि अन्येऽपि ऋतः स्युः तिक् च संज्ञायाम् । देवराताः रन्तिः ।

१००६ । सतिसाती वा । सन्तिश्च ।

१००७ । ढात् षण् ॥

ढात् पराद्धोः षण् स्यात् घे । कुम्भकारः

अघटं घटं करोतीति घटीकारः।

१००८। ह्रनचरगष्टक्॥

ढात् परेभ्य एभ्यष्टक् स्यात् घे। पापघ्नः कुरुचरः सामगः।

१००९। ह्रकृष्टः॥

ढात् पराभ्यां आभ्यां टः स्यात् घे। पुरःसरी यशस्करी विद्या भास्करः क्षपाकरः कर्म्मकरी दासी।

१०१०। शकृत्स्तम्बात्हृतिनाथात् फलेरजोमलात् देववातात् क्रहग्रहापं इः॥

एभ्य- परेभ्य क्रमादेतेभ्य इः स्यात् घे। शकृत्करिः वत्सः स्तम्बकरिः ब्रीहिः दृतिहरिः श्वा नाथ हरिः पशुः फलेग्रहिः मलग्रहिः देवापिः वातापिः।

१०११। कुच्यात्मोदराद्भः खिः

एभ्यः परात् भृञः खिः स्यात् घे।

१०१२। खित्यव्याजकषोमन्स्वौ ह्रिखान्तत्वं स्वेकाजिच॥

व्यञ्जनस्याजन्तस्यारुषस्यमत् स्वच स्यात् एकाजि चस्तु ह्रीकान्तत्वं स्यात् खिदन्ते घौ परे । कुक्षिम्भरिः आत्मम्भरिः उदरम्भरिः ।

१०१३ । खशेजेः ॥

धातुपरादेजयतेः खश् स्यात् घे । जनमेजयः ।

१०१४ । मन्यात् स्वार्थे ॥

आत्मानं गां मन्यते गांमन्यः स्त्रियंमन्या ।

१०१५ । मुञ्जकूलास्यपुष्पाद्धेटः ॥

एभ्यः पराद्धेटः खश् स्यात् घे । मुञ्जन्धयी वेटष्टित्त्वादीप् ।

१०१६ । नाडीशुनीस्तनकरमुष्टिपाणिनासिकात् ध्मस्व ॥

एभ्यः परात् ध्मो घेटश्च खश् स्यात् घे । नाडीन्धमः याड़िन्धयः ।

१०१७ ॥ घटीखारीवाताद्विध्मकस्तिलादसूर्य्योग्राल्ललाटान्मितनखमानात् ध्मातु दहृशतपपचः ॥

एभ्यः परेभ्यः क्रमादेतेभ्यः खश्

घटिन्धमः खारिन्धमः वातन्धमः विधुन्तुदः अरुन्तुदः तिलन्तुदः असूर्य्यम्पश्यः उग्रम्पश्यः ललाटन्तपः मितम्पचः नखम्पचः द्रोणम्पचः।

१०१८। कूलादुद्रुजुद्वहः॥

कूलादाभ्यां खश् स्यात् घे। कूलमुद्रुजा नदी कूलमुद्वहः समुद्रः।

१०१९। प्रियवशाद्वदर्त्तिमेघात् सर्व्वकूलाभ्रकरीषात् ङ्कषः खः॥

एभ्यः परेभ्यः क्रमादेतेभ्यः खः स्यात् घे प्रियम्बदः वशम्बदः भयङ्करः ऋतिङ्करः मेघङ्करः सर्व्वङ्कषः कूलङ्कषः अभ्रङ्कषः करीषङ्कषः

१०२०। क्षेमप्रियमद्रात् कृञ्॥

एभ्यः कृञः खो वा स्यात् घे। क्षेमङ्करः प्रियङ्करः मद्रङ्करः पक्षे क्षेमङ्कारः।

१०२१। भावघेत्वाशिताद्भुवः॥

अशिताद्भुवः खः स्यात् भावे घे आशितम्भवं वर्त्तते। आशितो भवत्यनेनेति आशितम्भव ओदनः।

१०२२। तृभृदृजिधृतपदमदसमद

गर्म्मलिहसहाजोनाम्नि ॥

एभ्यः खः स्यात् संज्ञायाम् । रथेन तरतीति रथन्तरः विश्वम्भरः पतिम्बरा पुरन्दरः भगन्दरः धनञ्जयः वसुन्धरा शत्रुन्तपः वाचंयमः अरिन्दमः इरया माद्यतीति इरम्मदः भुजङ्गमः वहंलिहः सर्व्वंसहः वातमजः ।

१०२३ । शर्द्धंजहोरङ्गमोरगतुरगतुरङ्गमविहगविहङ्गभुजगभुजङ्गपतगपतङ्गप्लवगप्लवङ्गाः ॥

एते खान्ता निपात्यन्ते । शर्द्धंजहातीति शर्द्धंजहो माषः उरसा गच्छतीति उरगः उरङ्गमः विहायसा गच्छतीति विहङ्गमः विहगः त्वरया गच्छतीति तुरगः तुरङ्गमः भुजेनगच्छतीति भुजगः भुजङ्गः पतेनगच्छतीति पतगः पतङ्गः प्लवेन गच्छतिती प्लवगः प्लवङ्गः ॥

१०२४। नग्नपलितप्रियान्धस्थूलसुभगाढ्यात् कृःखनट् घे च्व्यर्थे॥

एभ्यः परात् कृञः खनट् स्याद्घे च्व्यर्थे । अनग्नो नग्नः क्रियते ऽनेनेति नग्नङ्करणं पलि

तङ्करणं प्रियङ्करणं अन्धंकरणं शोकः स्थूलङ्करणं दधि सुभगङ्करणं रूपं आढ्यङ्करणं वित्तम् ।

१०२५ । भुवोत्रे खिष्णुखुकञौ ॥

नग्नादिभ्यः पराद्भुवस्त्वार्थे एतौ वे स्तः । नग्नंभविष्णुः नग्नम्भावुकः ।

१०२६ । टान्नजवहसहोविण् ॥

ढात्परेभ्य एभ्यो विण् स्यात् । सुखभाक् प्रष्ठवाट् तुराषाट् ।

१०२७ । अनडुच्छ्वेतवाहादिः ॥

एते विणन्ता निपात्यन्ते । अनो वहतीति अनड्वान् वृषः श्वेतैरुह्यते श्वेतवाः इन्द्रः अवयजतीति अवयाः उक्थानि शंसतीति उक्थशाः यजमानः पुरोडाः हविः पुरोडाशः ।

१०२८ । क्रमगमखनसनजनोविट् ॥

एभ्यो विट् स्यात् घे ।

१०२९ । विड्वनोर्ङा ॥

घोरन्तस्य ङा स्यात् विटि वनि च । उदधिक्राः अग्रेगाः बिषखाः गोषाः अजाः ।

१०३० । त्रासुसिस्मन् क्वनिप् वनिप् विच् क्विपः ॥

घोरेते स्युः के भावे । नीयते अनेनेति नेत्रं दंष्ट्रा नद्ध्री योक्त्रं योत्रं उरुव्यचाः हृचक्षाः रजः चक्षुः सर्पिः सुष्ठु ददातीति सुदामा सुगन्मा ।

१०३१ । हववतेर्नेम् ॥

क्तो हवस्य वस्य तेश्च इम् न स्यात् । सुधर्म्मा सुपीवा मातरिश्वा सुत्वा भूरिदावा वारिजावा सोमपाः रेट् रोट् क्रुङ् युङ् प्रत्यङ् अक्षद्यूः मित्रघ्रीः आशीः गीः वज्रभृट् घृतस्पृक् अस्यात् क्रव्यात् ।

१०३२ । छादेस्त्वमन्क्रीस् घेस्वः ॥

छादयतेः स्वः स्यात् ते मनि क्वाविसि घे च । छत्वं छद्मः छदिः तनुच्छत् उरश्छदः ।

१०३३ । ददृज्जुहूवाक्प्राट्धीश्रू द्रू-ज्वायतस्तूकटप्रूपरिव्राट्दिद्यु ज्जगत् दृढक स्रगुष्णिहः ॥

एते क्विवन्ता निपात्यन्ते । दीर्य्यतीति ददृत् जुहोत्यनयेति जुहूः वक्त्यनयेति वाक्

च्छतीति प्राट् अयत्नेनां श्रीः द्रवतीति द्रूः जवतीति जूः आयतं स्तौति आयतस्तूः कटं प्रवते कटप्रूः परिव्रजति परिव्राट् द्योतते दिद्युत् गच्छतीति जगत् धृष्णोतीति दधृक् सृज्यते स्रक् ऊर्ध्वं स्निह्यति उष्णिक् ।

१०३४ । जिर्वीऽत्यः ॥

अन्त्यो जिर्घः स्यात् । मितं ह्वयतीति मितद्रुः ।

१०३५ । वेध्याप्यां क्वौ ॥

एषां जिर्घः स्यात् क्वौ । ऊः धीः आपीः । ध्याप्योरत एव जिः ।

१०३६ । अमुङोझस्यणौ चातिकि ॥

अमन्तस्योङो घः स्याद्णौ झये क्वौ च नतु तिकि । प्रशान ।

१०३७ । स्विवावमवज्वरतरोवूङ् ङा अमे च ॥

एषाञ्च वङा सह ऊट् स्यात् क्वौ झसि ऽणौ अमे च । स्यूः ऊः मूः जूः तूः ।

१०३८ । राल्लोलोपः ॥

रात्परयोः छवयोर्लोपः स्यात् क्वौ भस्यणौ जसे च। मूर्च्छा मूः धूर्व्वी धूः।

१०३६। आदूटौत्रिः॥

अवर्णात् परस्योटो त्रिः स्यात्। जनान् अवतीति जनौः।

१०४०। यममनतनगमोऽन्तलोपः क्वौ॥

एषामन्तस्य लोपः स्यात् क्वौ। संयत् परिमत् परीतत् संगत्।

१०४१। स्वविश्वग्देवस्य टेरद्र्यक्वौ क्वौ॥

स्वेर्विश्वचो देवस्य च टेरद्रिः स्यात् क्विवन्तेऽञ्चतौ। सर्व्वानञ्चतीति सर्व्वद्र्यङ् विश्वद्र्यङ् देवद्र्यङ्।

१०४२ अमुद्र्यङ् अमुमुयङ् अदद्र्यङ्॥

अमुमञ्चतीत्यर्थे एते निपात्यन्ते।

१०४३। सहसन्तिरः सध्रिसमितिरिः॥

एषां क्रमादेते स्युः क्विवन्तेऽञ्चतौ। सध्र्यङ् सम्यङ् तिर्य्यङ्।

१०४४ । वीरुद्दोधङ् क्वौ ॥

वीरुत् ।

१०४५ । त्यदादिभवत्समानान्योपमानाद्दृशष्टकसक्क्विपोढे ॥

त्यदादेर्भवतः समानादन्यस्माच्चोपमानात् दृश एते स्युर्ढे ।

१०४६ । ऐङी ॥

ऐङी स्यात् ढभाद्यन्ते दृशि । स इव दृश्यते तादृशः तादृक्षः तादृक् भवादृशः ।

१०४७ । समानेदंकिमदःसेक्यमूः ॥

एषां स्थाने स ई की अमू एते क्रमात् स्युः टगाद्यन्ते दृशि । सदृशः ईदृशः कीदृशः अमूदृशः अन्यादृशः ।

इति टनादिपादः ।

क्तादिः ।

१०४८ । क्तक्तवतू भूते ढभावे घे ॥

धोरतीतेऽर्थे ढभावे क्तो घे क्तवतुः स्यात् उकावितौ स्तुतस्त्वया विष्णुः स्नातं मया विष्णुर्विम्बं कृतवान् ।

१०४९ । च्वेर्घोऽढ़ेभावदैन्याक्रोशेतुवा

च्वेर्घः स्यात् न तु ढ़े भावदैन्याक्रोशे तु वा तयोः परयोः ।

१०५० । ह्लवाद्योदिद्द्र्चीयलस्था तोनतोऽष्ट्, मूर्च्छ्र्ख्याध्यामदोदश्च ॥

ह्लादेर्लादेरोकारेतोदान्ताद्रेफात् चीशब्दात् यलयुक्ताकारान्तात् परयोस्तयोस्तस्य नः स्यात् पूर्वस्य च दस्य नः न तु प्रादिभ्यः। चीणः चीणवान् । अद्य किं चितः कामो मया ।

१०५१ । ष्ट्, दुश्विज् र्णोः कितोनेम् ॥

ष्ट्ञो ष्टङ् ऋदन्तादुवर्णान्तात् श्विङ् ऊर्णोश्च कित इम् न स्यात् । ह्लनः ह्लनवान् दीनः लूनः जीनः रुग्नः भुग्नः प्रहीणः भिन्नः निर्वण्णः घ्रानः ग्लानः श्राणः । प्रादेस्तु पूर्तः मूर्त्तः ख्यातः ध्यातः मत्तः ष्टृतः श्वितः स्तृतः ऊर्णुतः।

१०५२ ॥ दिव्यञ्चश्योऽजिगीषाजाऽस्पर्शे न त स्तयोः ॥

दिवेरजिगीषायामञ्चतेरजे श्यायतेरस्पर्शे तयोस्तस्य: स्यात् । आद्यूनः समक्तः।

१०५३। घनस्पर्शे श्योजिः॥

घने स्पर्शे चार्थे श्योजिःस्यात् तयोः। शीनं घृतम्। जगीवादौ तु द्यूतम्। उदक्तमुदकं कूपात्। शीतं जलम्। नस्पर्शे किं संश्यानो वृश्चिकः शीतात् संकुचित इत्यभिः॥

१०५४। प्रतेः॥

प्रतिपूर्व्वस्य श्यो जिः स्यात् तयोः। प्रतिशीनः

१०५५। अभ्यवाद्वा॥

अभ्यवात् परस्य श्यो जिः स्याद्वा तयोः। अभिशीनः अभिश्यानः अवशीनः अवश्यानः।

१०५६। षिञोढ़घे न तोग्रासे॥

षिञः परस्य तयोस्तस्य नः स्यात् ढघे ग्रासे वाच्ये। षिनो ग्रासः स्वयमेव।

१०५७ पूञोनाशे॥

पूनो नष्टः। अन्यत्र पूतः।

१०५८ दुग्वोर्घस्व॥

आभ्यां तयोस्तस्य नःस्यात् तयोर्घस्व। दूनः।

१०५९। क्ष्वेः फङ् च॥

क्ष्वेस्तयोस्तस्य नः स्यात् कङ च। क्ष्मः

१०६० । ह्रीघ्राल्रोन्दनुदविन्द्योर्वा ॥

एभ्यस्तयोस्तस्य नः स्यात् वा । ह्रीणः ह्रीतः घ्राणः घ्रातः त्राणः त्रातः उन्नः उत्तः नुन्नः नुत्तः विन्नः वित्तः ।

१०६१ । क्षैशुष्पचोर्मकवः ॥

एभ्यस्तयोस्तस्य म क व एते क्रमात् स्युः । क्षामः शुष्कः पक्वः ।

१०६२ । प्रस्त्यौम वा जिश्च ॥

एभ्यस्तयोस्तस्य मः स्यात् वा जिश्च । प्रस्तीमः प्रस्तीतः स्यात् किं संस्त्यानः ।

१०६३ । निर्व्वाणभित्तर्णवित्तफुल्लोत्फुल्लसंफुल्लप्रफुल्लक्षीवकृशपरिकृशा स्त्यः ॥

एते क्तान्ता निपात्यन्ते । निर्व्वाणः शान्तः निर्व्वाणं मुक्तिः भित्तं खण्डं ऋणं विधार्ष्यं वित्तं धनं वित्तः प्रतीतः फुल्लो विकसितः उत्फुल्लः संफुल्लः प्रफुल्लश्च क्षीवो मत्तः कृशस्तनुः परिकृशश्च उल्लाघो नीरुजः ।

१०६४ । नुधवसपूजार्थज्ञगाद्यर्थ

लुभः क्त्वेम् ॥

एभ्यः परयोस्तयोः क्त्वेम् स्यात् । क्षुधितः उषितः अञ्चितः लभितः । गतौ तु अक्तः । गार्ध्ये तु लुब्धः ।

१०६५ । पूक्लिशवमजपध्याश्वसस्तयो र्वा ॥

एभ्य स्तयोरिम् स्यात् वा ।

१०६६ । पूघोष्टषमिदच्चिदक्ष्विदत्क्षमा र्थेम्ष्टषां सेमोणु : ॥

एषां णुः स्यात् तयो सेमोः । पवितः पूतः क्लिशितः क्लिष्टः वमीतः वान्तः जपितः जप्तः विश्वसितः विश्वस्तः आश्वसितः आश्वस्तः धर्षितं धर्षितं मेदितं चेदितं स्वेदितं मर्षितम् । क्षमार्थः किं अपमृषितं वाक्यम् ।

१०६७ । भावादिके वोदुङोऽव्यतः ॥

विहिताप उदुङो भावादिकयोर्णुर्वा स्यात् तयोः सेमोः । द्योतितं द्युतितं तेन । अन पक्षु क्षुधितम् ।



१०६८ । लोपाक्ष : ॥

जेर्लोपः स्यात् तयोः सेमोः । भावितः भावितवान् ।

१०६९ । नेम् डीश्वीदिद्वमोऽपत्यने-कार्चनिष्कुषः॥

डीङः श्वयतेरोकारेतो विकल्पितेमश्च पत्यादिवर्ज्जात्तयोरिम् न स्यात् । डीनः श्वूनः दीप्तः गूढ़ः ऋतः ततः । पत्यादेस्तु पतितः दरिद्रितः निष्कुषितः ।

१०७० । आदितः ॥

आकारेतस्तयोरिम् न स्यात् । ञिन्नः ।

१०७१ । भावादिढे वा ॥

भिन्नं मेदितं तेन । प्रभिन्नः प्रमेदितः सः ।

१०७२ । शकेढै ॥

शकितोऽर्च्चितुं श्विवस्तेन शक्तः ।

१०७३ । क्षुब्धवाढ़स्वान्तध्वान्तफाण्ट-कष्टघुष्टलग्नम्लिष्टविरिब्धधृष्टविशस्त-परिवृढ़दृढभ्रष्टतष्टत्ताश्व्यर्णाः ।

एते क्तान्ता निपात्यन्ते । क्षुब्धो मन्थः बाढं



भृशं स्वान्तं मनः ध्वान्तं तमः फाण्टं कषाय-

भेद: कष्टं कृच्छ्रं घुष्टं घुष्टितं लग्नं ग्राक्तं क्लिष्टं असृष्टं विरिब्ध: स्वर: धृष्ट: प्रगल्भ: विग्रास्त: परिवृढ: प्रभ: दृढो बली भृतं पक्वं दृक्तो गुण: अर्व्यर्गा समीपम् ।

१०७४ । नैन सन्निव्यर्द: ॥

संनिविपूर्व्वात् । अर्द्दते सृयोरिम् न स्यात् समर्ण: न्यर्ण: व्यर्ण: ।

१०७५ । वा रूप्रामहृपत्वरसंघुषा-स्वन: ॥

एभ्य सृयोरिम् न स्यात् वा । रुष्ट: रुषित: अन्त: अमित: हृष्ट: हृषित: तूर्ण: त्वरित: संघुष्ट: संघुषित: आस्वान्त: आस्वनित: ।

१०७६ । दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ता वा॥

एते क्तान्ता निपात्यन्ते वा । पक्षे दमित:। पूरित: दासित: स्पाशित: छादित: ज्ञपित: ।

१०७७ । स्फाय: स्फी वा ॥

स्फीत: स्फीतवान स्फात: स्फातवान् ।



१०७८ । प्यायोऽग: पी स्वाङ्गे तु वा ॥

अगेः प्यायः पी स्यात् स्वाङ्गादन्यत्र तु वा तयोः । पीनं मुखं प्यानः पीनः स्वेदः ॥

१०७९ । आङोऽन्धू धसोः ॥

आङः परस्य प्यायः पी स्यात् तयोः अन्धू धसोः । आपीनोऽन्धुः आपीनं ऊधः ।

१०८० । ह्लादेः स्वः क्तौ च ॥

ह्लादेः स्वः स्यात्तयोः क्तौ च । प्रह्लन्नः ।

१०८१ । दोषोमास्थां ङिक्त्यणौ ॥

एषां ङिः स्यादणौ तकारे परे । दितः सितः मितः स्थितः ।

१०८२ । छाशोर्वा ॥

छितः छातः शितः शातः ।

१०८३ शोव्रते नित्य ॥

संशित व्रतम् ।

१०८४ । धाञोहिः ॥

धाञो हिः स्यात् अणौ ते परे । हितः ।

१०८५ । चरफलोऽदुः ॥

अनयोरकार उः स्यात् अणौ ते । प्रफलितः ।

१०८६ । दद्दोऽध ः ॥

दासंज्ञकस्य धावर्जस्य दत् स्याद्गणौ ते । दत्तः अधः किं धीतः ।

१०८७ । ग्यचस्त्वा ॥

गेरचः परस्याधो दासंज्ञकस्य वा तः स्याद्गणौ ते । प्रत्तः प्रदत्तः ।

१०८८ । घींदाते गीचः ॥

नीत्तं । दूचः किं प्रत्तम् ।

१०८९ । जग्धोऽदोयपि च ॥

अदो जग्धः स्याद्गणौ ते यपि च । जग्धं ।

१०९० । घेचादिढ़े क्तः ॥

आदिढे विहितः क्तो घे स्यात् ढभावयोश्च प्रक्तः कटं सः प्रक्तः कटस्तेन । चेर्घे दूर्घे प्रचीणःसः प्रचीणं प्रचितं तेन । चीणः चितेऽयं तपस्वी चीणायुः चितायुः ।

१०९१ । गत्यर्थाढ़श्चोस्थासवजनजॄश्लिषरुहः ॥

एभ्यो घे क्तः स्यात् ढभावयोश्च । गङ्गां गतः कृष्णं प्राप्तः शयितः शेषमधिशयितो विष्णुः वैकुण्ठमधिष्ठितः शिवमुपासितः हरिदिनमुपो

षितः राममनुजातोऽच्युतः विश्वमनुजीर्णोऽनन्तः लक्ष्मीमाश्लिष्टो मुकुन्दः गरुड़मधिरूढो गोविन्दः।

१०६२। भ्रौव्यगत्यऽदनार्थाड्डे च॥

निश्चलार्थात् गत्यर्थात् भोजनार्थाच्च क्तो डे स्यात् ढभावे घे च। मुकुन्दस्यासितमिदमिदं यातं रमापतेः। भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः।

१०६३। ज्ञार्चेच्छार्थजीच्छीलादेः सति॥

एभ्यो वर्त्तमाने क्तः स्यात् तेषु। विदितः पूजितः वाञ्छितः दृष्टः शीलितः शिवोऽनुवर्त्तते।

१०६४। ठोपमवत् क्वसुकानौ॥

धोरेतौ क्रमात् ध्यवाः पमवत् स्तः। बभञ्जान् जजागर्वान् जजागृवान् दुद्यूवान् दिदिवान् निविश्वान् विविच्छान्।

१०६५। वसोर्घमेकाज्घ्नणातइम्॥



घस एकाचो ज्जारेण आदन्ताच्च वसोरिम्

स्यन्नान्यतः। जक्षिवान आदिवान आरिवान ईयिवान दर्दिवान।

१०९६। हनगमदृशविशविन्दो वा॥

एभ्योवसोरिम् स्याद्वा। जघ्निवान् जघन्वान् जग्मिवान् जगन्वान् ददृशिवान् ददृश्वान् विविशिवान् विविश्वान् विविदिवान् विविद्वान्।

१०९७। दाश्वान्साह्वान्मीढ्वान्॥

एते वस्वन्ता निपात्यन्ते। चक्राणः जजागराणः जजाग्राणः अनूचानः।

१०९८। कीपमवत् शतृ शानौ॥

धोरेतौ क्रमात् क्याः पमवत् स्तः। पचन्।

१०९९। शानेऽतोमन्॥

अकारस्य मन् स्यात् शाने। पचमानः।

११००। यासोऽस्य॥

आसःपरस्यास्य शानस्य अा ई स्यात्। आसीनः

११०१। वेत्तेः शतुः क्वसुर्वा॥

विदः परस्य शतुः क्वसुः स्याद्वा। विद्वान



विदन।

११०२। शक्तिवयस्ताच्छील्ये शतुःशानः॥

शत्रुं निघ्नानः कवचं बिभ्राणः भोगं भुञ्जानः।

११०३। तीपमवत् स्यत्स्यमानौ॥

धोरेतौ क्रमात् स्याः पमवत् स्तः। करिष्यन् करिष्यमाणः।

इति क्तादिपादः।

---

इष्णुवादिः।

११०४। णिभ्राजभूसहरुचचरवृधवृत

तप्रजनापत्रपालंकृनिराकृन्मदपतपच-

इष्णुर्घे॥

एभ्य इष्णुः स्यात् घे। कारयिष्णुः भ्राजिष्णुः सहिष्णु रोचिष्णुः चरिष्णुः वर्द्धिष्णुः वर्त्तिष्णुः प्रजनिष्णुः अपत्रपिष्णुः अलंकरिष्णुः निराकरिष्णुः उन्मदिष्णुः उत्पतिष्णु उत्पचिष्णुः।

११०५। ष्णुक् भूजेः॥

आभ्यां ष्णुक् स्यात् घे। भूष्णुः जिष्णुः।



११०६। दंशलाक्षिपाच्चिपचपरिभ्रजः स्नुः॥

एभ्यः ग्स्नुः स्यात् घे ॥ ग्लास्नुः म्लास्नुः स्थास्नुः जेष्णुः पक्ष्णुः परिमार्क्ष्णुः ।

११०७ । क्षिपत्रसगृधधृषः क्नुः ॥

एभ्यः क्नुः स्यात् घे । क्षिप्नुः त्रस्नुः गृध्नुः धृष्णुः ।

११०८ । शॄस्थाभूकमगमहनलषवृषपतपदोञुकः ॥

एभ्यो ञुकः स्यात् घे । शारुकः स्थायुकः भावुकः कामुकः गामुकः घातुकः लाषुकः वर्षुकः पातुकः पादुकः ।

११०९ । भिक्ष जल्पकुट्टलुण्ठवृञः षाकः ॥

एभ्यः षाकः स्यात् घे । भिक्षाकी जल्पाकी कुट्टाकी लुण्टाकी वराकी ।

१११० । पतिग्रहिस्पृहिशीङ आलुः ॥

एभ्यः आलुः स्यात् घे । पतयालुः गृहयालुः स्पृहयालुः शयालुः ।

११११ । शतसदसिधेदारुः ॥

एभ्य रुःस्यात् घे । शत्रुःसद्रुः सेरुः धारुःदारुः ।

१११२ । घसस्वदः क्मरः ॥

एभ्यः क्मरः स्यात् घे । घस्मरः स्मरः अद्मरः ।

१११३ । मिद्भासभन्जोघुरः ॥

एभ्यो घुरः स्यात् घे । मेदुरः भासुरः भङ्गुरः ।

१११४ । छिद्भिद्विदः कुरः ॥

एभ्यः कुरः स्यात् घे । छिदुरः भिदुरः विदुरः ।

१११५ । जागृयङन्तयजजपवददन्श ऊकः ॥

एभ्य ऊकः स्यात् घे । जागरूकः यायजूकः जंजपूकः वावदूकः दन्दशूकः ।

१११६ । यङन्तचलपतसहवहः किः ॥

एभ्य किः स्यात् घे । चाचलिः पापतिः सासहिः वावहिः ।

१११७ । द्विस्चाद्रुङलोपिनः ॥

आदन्तादृवर्णान्तदुङलोपिनश्च कः स्यात् घे । तेषाञ्च द्वित्वं । ददिः चक्रिः जग्मिः ।

१११८ । यायायभासकसस्थेशपिश-प्रमदोवरः ॥

एभ्यो वरः स्यात् घे । यायावरः भास्वरः कस्वरः स्थावरः ईश्वरः पेश्वरः प्रमद्वरः ।

११९९ । त्वरप् स्नजीन्नशगमस्त्रमश्च ॥

एभ्यः त्वरप् स्यात् घे । मस्य च तः । सृत्वरी जित्वरी इत्वरी नश्वरी गत्वरी ।

११२० । हिंसदीपकम्पाजस्मिङकमनमोरः ॥

एभ्योरः स्यात् घे । सिंस्रः दीप्रः कम्प्रः अजस्रः स्मेरः कम्रः नम्रः ।

११२१ । सनभिक्षाशंस उः ॥

एभ्य उः स्यात् घे । रिप्सुः भिक्षुः आशंसुः ।

११२२ । विन्दिच्छू ॥

एतौ निपात्यौ । वेत्तीति विन्दुः इच्छतीति इच्छुः

११२३ । स्वपतृषघृषोङ्नज् ॥

एभ्योः ङ्नज स्यात् घे । स्वप्नक् तृष्णक् धृष्णक् ।

११२४ । दृवन्द्यारुः ॥

आभ्यामारुः स्यात् घे । दारुः वन्दारुः ।

११२५ कुककौ भियः ॥

भीरुः भीलुकः ।

११२६ । स्पृहिग्रहिश्रुहृजेराय्यः ॥

एभ्यः आय्यः स्यात् घे । स्पृहयाय्यः ग्रहयाय्यः श्रवाय्यः हराय्यः जयाय्यः ।

११२७ । गण्डिमण्डिजिजनिनन्दिभ्योऽन्तः ॥

एभ्योऽन्तः स्यात् घे । गण्डयन्तः मण्डयन्तः जयन्तः जनयन्तः नन्दयन्तः ।

११२८ । स्तनिगदिमदिहृदिदुषेरित्नुः ॥

एभ्य इत्नुः स्यात् घे । स्तनयित्नुः गदयित्नुः मदयित्नुः हृदयित्नुः दूषयित्नुः ॥

११२९ । कॄगॄजागुः क्विः ॥

एभ्यः क्विः स्यात् घे । कीर्व्विः गीर्व्विः जागृविः ।

११३० । स्वयं शं वि सं प्राद्भुवो डुः ॥

एभ्यो डुः स्यात् घे । स्वयम्भुः शम्भुः विभुः सम्भुः प्रभुः ।

११३१ । लूधूखनसूचरपूसहवह इत्रोधे ।

एभ्य इत्रः स्याद्धे । लवित्रं चरित्रं धवित्रं खनित्रं सवित्रं चरित्रं पवित्रं सहित्रं वहित्रं

११३२। घञलनटोऽघे॥

धोरेते स्युर्नतु घे। प्रकारः पादः दासः उपाध्यायः प्रसादः समाजः श्रमः कामः वामः आचामः भ्रमः श्रामः यमः यामः विश्रमः विश्रामः।

११३३। कभावेऽभी॥

प्रघसः वधः करः निलयः समजः भयः लयः। स्नानं मानं दानं प्रक्षेपणं वपनं वयनं अजनं दरिद्राणं श्रयनम्।

११३४। ष्ठीवनसीवने वा॥

पक्षे ष्ठेवनं सेवनम्।

११३५। मुण लभोऽनेकदुःसोर्गेः खलघञोः॥

केवलदुःसुवर्जात् गेः परस्य लभो मुण् स्यात् खलि घञि च। प्रलम्भः। अन्यत्र दुर्लभः एकेति किं अति दुर्लभः।

११३६। स्यदैधावोदहिमश्रथप्रश्रथस्फारस्फालरागकायनिकायाकायाः॥



एते घञन्ता निपात्यन्ते। स्यदो वेगः एधः

दूधुम् अनोदः अवक्लेदः हिमश्रथः हिमश्र-
थनं प्रश्रथः प्रश्रथनं स्फारः स्फोरणं स्फालः
स्फोलनं रज्यतेऽनेनेति रागः कायोद्देहः निका-
यो निवासः आकायस्थितिः ।

११३७ । खनोडडरेकेकवकाः ॥

आखः आखरः आखनिकः आखनिकवकः

११३८ । व्याप्तौ भावे णिन् ॥

धोर्भावे णिन् स्याद्व्याप्तौ सत्यां णिनन्तात्
स्वार्थे णः । सांराविणं वर्त्तते ॥

११३९ । व्यतीहारे णन स्त्री ॥

धोर्भावे णन् स्यात् व्यतीहारे णनन्तात्
स्वार्थे ष्णः । तदन्तश्च स्त्रियां व्यवहारी ।

११४० । ट्वितोऽथुर्भावे ॥

टकारेतो धोरथुः स्यात् भावे । वेपथुः ।

११४१ । ड्वितस्त्रिमक् ॥

डुकारेतस्त्रिमक् स्यात् ध्वर्थान्निष्पन्ने । कर-
णाज्जातं कृत्रिमम् ।

११४२ । स्वपरञ्जयतप्रच्छविच्छयाच-



यजोनङ् भावे न जिः ॥

एभ्यो नङ् स्यात् भावे नच ञिः । स्वप्नः रक्ष्णः यत्नः प्रश्नः विश्नः जाज्ञा यज्ञः ।

११४३ । क्रिर्दो ऽन्तर्गे ॥

अन्तरोगेस्च परात् दासंज्ञकात् क्रिः स्याद्भावे । अन्तर्धिः आदिः ।

११४४ । टाड्डे ॥

ढात् परात् दः क्रिः स्यात् डे । वारिधिः पयोरिधिः ।

११४५ । क्तिस्त्वघे ॥

धोः क्तिः स्यात् नतु घे तदन्तस्च स्त्रियां । कृतिः बुद्धिः स्मृतिः प्रकृतिः ।

११४६ । ह्लादेः स्वः क्तौ च ॥

प्रह्लत्तिः भूतिः फुल्तिः ।

११४७ । कॄगॄ ज्याग्लाहाल्वादेर्निः ॥

एभ्य परस्याः क्तेर्निः स्यात् । कीर्णिः गीर्णिः ज्यानिः ग्लानिः हानिः लूनिः पूर्णिः ।

११४८ । सातिहेतिजूतियूतिस्यति-हिनोतियौ तिजवतीनां ॥

११४६ । शीव्रजयजविद्सुखासमनचर भ्रटाख्यैनस मजनिपतनिसदः क्यप् ॥

एभ्यो भावे क्यप् स्यात्तदन्तश्च स्त्रियाम् । शय्या व्रज्या इज्या विद्या सुत्या आस्या मन्या चर्य्या भ्रत्या अटाट्या इत्या समज्या निपत्या निसद्या ।

११५० । कुः शश्च ॥

करोतेः शः स्यात् क्यप् च भावे स च स्त्रियाम् । क्रियाकृत्या ।

११५१ । सृजागुर्य्यः ॥

आभ्यां यः स्यात् भावे स च स्त्रियाम् । परिसर्य्या जागर्य्या ।

११५२ । शंस्त्यादः ॥

आभ्यामः स्यात् भावे स च स्त्रियाम् । प्रशंसा दिदृक्ष आटाट्या कण्डूया ।

११५३ । सेमक्तात्सरोः ।

यस्मात् क्तो विहितः सेम् स सेमक्तः तस्माद्गुमतो धोरः स्यात् स च स्त्रियां । ईहा जागरा । सेमक्तात् किं नीतिः राद्धिः गुमतः किं पत्तिः ।

११५४ । तुखेच्छारातारावाराकारा-
गोधाहारारेखालेखाचूडाः ।

एते आन्ता निपात्यन्ते । चोदना चूडा ।

११५५ । भीषिचिन्तिपूजिकथिकुम्बि-
चर्च्चिस्पृहितोलि दोलिभिद्भिदाद्या-
त्वर्यटादेर्ङः ॥

एभ्यो भावे ङः स्यात् स च स्त्रियाम् । भीषा
चिन्ता पूजा कथा कुम्बा चर्च्चा स्पृहा तोला
दोला पचा भिदा छिदा गुहा विदा क्षिपा
जना पीड़ा सरा वसा रुजा घटा व्यथा त्वरा ।

११५६ । आतोऽन्तः श्रद्गेः ॥

एभ्यः परादादन्तात् ङः स्यात् स च स्त्रियां ।
अन्तर्द्धा श्रद्धा संज्ञा प्रमा ।

११५७ । भीषिश्रन्थिग्रन्थिवेत्तिवन्दा
सोऽनः ॥

एभ्यो ऽनः स्यात् स च स्त्रियां । कारणा
ईषणा श्रन्थना ग्रन्थना वेदना वन्दना आसना ।

११५८ । प्रश्नाख्यानेञिः ॥

प्रश्ने चाख्याने च धोर्णिः स्यात् स च स्त्रियाम् । काङ्कारिमकार्षीः सर्व्वां कारिमकार्षम् ।

११५९ । नञोऽन्याक्रोशे स्त्री ॥

नञः पराद्धोरनिः स्यादाक्रोशे स च स्त्रियाम् । अजीवनिस्तस्य भूयात् अप्रयाणिः ।

११६० । ईषद्दुःसोः खल् भावे ढे ॥

एभ्यः पराद्धोः खल् स्याद्भावे ढे च । ईषदाढ्यम्भवं भवता दुराढ्यम्भवं भवता । ईषत्करः कटस्त्वया दुष्करः सुकरः ।

११६१ । आतोऽनोऽदरिद्रः ॥

दरिद्रावर्ज्जादादन्तादीषद्दुःसोः परादनः स्याद्भावे ढे च । ईषत्पानः दुष्पानः सुपानः । अदरिद्रः किं ईषद्दरिद्रः ।

११६२ । दृशशासयुधधृषमृषो वा ॥

ईषद्दुःसोः परेभ्य एभ्योऽनः स्यात् भावे ढे च वा । सुदर्शनः सुदर्शः दुःशासनः दुःशासः दुर्य्योधनः दुर्य्योधः सुधर्षणः सुधर्षः ईषन्मर्षणः ईषन्मर्षः ।

११६३ । तादर्थ्ये चतुम् ॥

धोस्तुम् स्यात् तादर्थ्ये । कृष्णं द्रष्टुं याति

११६४ । क्त्वाच् वा निषेधेऽलखलुना

निषेधार्थयोरलंखल्वोर्योगे धोः क्त्वाच स्याद्वा भावे । अलं दत्वा अलं दानेन खलु पीत्वा खलु पानेन ।

११६५ । पूर्ब्बकाले ॥

पुर्व्वस्मिन् काले स्थिताद्धोः क्त्वाच स्यात् । विष्णुं नत्वा स्तौति ।

११६६ । न कित् स्कन्दस्यन्दः ॥

स्कन्त्वा स्यन्त्वा ।

११६७ । सेमत्क्षुधकुषक्लिशगुधमृड-मृदवदवसग्रहः ॥

धोः पर इम्सहितः क्त्वाच् किन्न स्यान्तु क्षुधादेः । शयित्वा । सेमः किं श्रुत्वा । क्षुधादेः किं क्षुधित्वा ।

११६८ । ट षकृषकथक्तन्चलुञ्च् तृतोवा ॥



एभ्यः सेम् क्त्वाच् किन्नस्याद्वा । तर्षित्वा

मर्षित्वा कर्षित्वा वञ्चित्वा लुञ्चित्वा अर्त्तित्वा ।
पच्चे तर्षित्वा इत्यादयः ।

११६९ । थफान्नुङः ॥

नकारोङस्यान्तात् फान्ताच्च सेम्क्वाच् किन्न स्याद्वा । श्रन्थित्वा ग्रन्थित्वा ग्रथित्वा गुम्फित्वा गुफित्वा नुङः किं कोथित्वा रेफित्वा ।

११७० । नशजोऽनिमः ॥

नशो जान्ताच्च नुङोऽनिमः परः क्वाच् किन्न स्याद्वा । नष्ट्वा नंष्ट्वा भक्त्वा भंक्त्वा । अनिमः किं अञ्जित्वा । १६ व्युङोऽवोहसादेरिति । द्योतित्वा द्युतित्वा लेखित्वा लिखित्वा रुदादेस्तु रुदित्वा विदित्वा मुषित्वा । अवः किं देवित्वा हसादेः किं एषित्वा ओषित्वा ।

११७१ । पूक्लिशुदित इम ॥

एभ्यः क्वाच् इम स्याद्वा । पवित्वा पूत्वा क्लिशित्वा क्लिष्ट्वा शमित्वा शान्त्वा ।

११७२ । क्रमोर्घो वा ॥

क्रमित्वा क्रान्त्वा क्रन्त्वा ।

११७३ । जृ श्वोर्नीजः ॥

आभ्यां क्त्वाच इम् स्यात् नतु ब्रश्चेर्जिः । ज-
रित्वा ब्रश्चित्वा ।

११७४ । ह्राकोर्हिः ।

हित्वा ।

११७५ । व्यादनञः क्त्वो यप् से ॥

नञ् वर्जात् व्यात्पराद्वोः क्त्वो यप् स्यात्
से सति । प्रकर्ण्या हत्वा प्रकृत्य प्रवत्य प्रतत्य
प्रहत्य उदज्य प्रदाय प्रमाय प्रगाय प्रहाय
प्रपाय प्रस्थाय । ५ दीङ्श्याम्निति यपि ङा
प्रदाय । १ मिम्योरिति ङा प्रमाय प्रलाय
प्रलीय ।

११७६ । म्लोपोवानिमः ॥

अनिमो मस्य लोपः स्याद्वा यपि । प्रमत्य
प्रणम्य । अनिमः किं प्रशम्य ।

११७७ । घोर्ञे रयः ॥

घु पूर्वस्य ञे रयः स्याद्यपि विगणय्य
घोः किं संप्रधार्य्य ।

११७८ । वापः ॥

आपः परस्य ञे रयः स्याद्वा यपि । प्रापय्य
प्राप्य ।

११७९ । वामेर्व्योर्मिर्व्यौ ॥

मेङो मिः चः चीः स्याद्वा यपि । अपमित्य अपमाय मचीय मचित्य ।

११८० । न वेञ्ज्राव्योर्ज्जिः ॥

एषां जिर्न स्यात् यपि । प्रवाय प्रज्याय प्रव्याय ।

११८१ । संपरिव्योर्वा ॥

आभ्यां व्येञो जिर्वा स्यात् यपि । संवीय संव्याय परिवीय परिव्याय ।

११८२ । चणम्बाभीक्ष्ण्ये पूर्व्वकाले ॥

घोः पूर्व्वकाले चणम्बा स्यात् पौनःपुन्ये ।
स्मृत्वा स्मृत्वा नमसि स्मारं स्मारं नमसि ॥
कृतो ये यत्र विहितास्तत्र नूनं भवन्ति ते ।
क्तङोः कभाव इत्युक्तेरन्यत्रापि प्रयोगतः ॥

तथाच

कृतद्धितसमासानामभिधानं नियामक ।
लक्षणं त्वनभिज्ञानां तदभिज्ञानसूचकम् ॥

११८३ । बहुलं ब्रह्मणि ॥

यदिदं लौकिकप्रयोगप्रयुक्तस्तत्र बहुलं

तद्वैदिक प्रयोगव्युत्पत्तौ बहुलं ज्ञेयम्। कचिद्विहितं न स्यात् कचिन्निषिद्धं स्यात् कचिद्वा स्यात् कचित्ततोऽन्यदपीत्यर्थः। यथा पूर्व्वैभिः नद्यैः ब्राह्मणास् इत्यादौ वेदसिद्धः ब्रह्मशब्दोऽत्र मङ्गलार्थः।

इत्युणादिपादः।

तद्धिताध्यायः।

समाप्तम्।

## वोपदेवप्रशंसाश्लोकोऽयम् ।

गीर्व्वाणवाणीवदनं मुकुन्दसंकीर्त्तनञ्चेत्युभयं हि लोके ।

सुदुर्लभं तच्च न मुग्धबोधान्न लभ्यतेऽतः पठनीयमेतत् ।

विद्वद्धनेश्वरच्छात्रो भिषक्केशवनन्दनः । वोपदेवश्चकारेदं विप्रो वेदपदास्पदम् ।

द्यौर्व्वाचस्पतिनेव पन्नगपुरी शेषाहिनेनाभवत्।
येनैकेन विदुष्मती वसुमती मुख्ये न संख्यावतां ॥
सोऽयं व्याकरणार्णवैकतरणिश्चातुर्य्यचिन्तामणिः।
जीयात्कोविद गर्व्वपर्व्वतपविः श्रीवोपदेवः कविः ॥

इत्याचार्य्यचक्रचूड़ामणिश्रीलश्रीवोपदेव गोस्वामि विरचितं मुग्धबोधं व्याकरणं समाप्तम्।

# विज्ञापन।

कलिकाता निमतला घाट ष्ट्रीट ८ नं मोकान में संवादज्ञानरत्नाकर यन्त्रमे देवनागराक्षरों मे मुद्रित काव्य, नाटक, अलङ्कार, व्याकरण, साहित्य, न्याय, दर्शन, वेदान्त, वैद्य, ज्योतिष, छन्द और धर्मशास्त्रादि बहुविध संस्कृत औ हिन्दी पुस्तक स्वल्प मूल्य से विक्रयार्थ उक्त स्थान मे प्रस्तुत है। इति।

श्रीभुवनचन्द्र वसाक।